रत्नमत्स्यैः कर्कटैश्च रत्नकूर्मैः समावृतम् ।
कुरुविन्दोत्तमलसत्सहस्रदलपङ्कजैः ।। १० ।।

विकसद्बन्धुरामोदपर्यन्तामलकैः सरः ।
मरुदुत्थैस्तत्परागरञ्जितैस्तीर्थवारिभिः ।। ११ ।।

मरालोदकसञ्चारि हरित्पत्राच्छकुक्कुटैः ।
सारसैः सारसारावचक्रवाकयुगैर्वृतम् ।। १२ ।।

तत्तीरपरितः स्वच्छछाया सञ्छन्नमौलिभिः ।
वनस्पतिवनैर्दिव्या तत्र सीमा कृता मुदा ।। १३ ।।

तत्प्रान्तरत्नगर्भोरुमण्डपावलिभासुरम् ।
ज्वलत्कुम्भोरुवलभीजालकछादितान्तरम् ।। १४ ।।

प्रफुल्लरुद्रमन्दारै[1] रत्नपङ्कजशोभितैः ।
तिलकैरत्नमालैश्च तमालोत्तमसालकैः ।। १५ ।।

धवैर्नीपैश्च पनसैर्लिकुचैर्बकुलैरपि ।
अशोकैः कर्णिकारैश्च कुटजैश्च करण्टकैः ।। १६ ।।

तगरै रगरै राजद्राजवृक्षैः शिरीषकैः ।
तक्कोलाङ्गोलपुन्नागनागार्जुनकशिंशुभिः[2] ।। १७ ।।

चन्दनैर्नन्दनाकारैर्नयनानन्द सुन्दरैः ।
श्रीकरश्रीपरिवृतश्रीवृक्षैः पाटलैर्धवैः[3] ।। १८ ।।

---

1. कुन्द अथवा रत्न । 2. शिंशुपैः (शिंशुपावृक्षैः) ।
3. द्रुमैः अथवा तथा इति ।।

सन्तानैः पारिजातैश्च जम्बुजाति फलंद्रुमैः ।
कोविदारैर्देवदारु विभीतकहरीतकैः ।। १९ ।।

वटोरुपटलैश्चैव पूगनारेलसर्जकैः ।
कदलीदललोलैश्च फलपुष्पवनालिभिः ।। २० ।।

लवङ्गैः कुशिकैः फुल्लकृष्णागरुमधूककैः ।
कुन्दवल्यो मल्लिवल्यो द्राक्षैलावलिगुच्छकैः ।। २१ ।।

शोभिताः शाखिशाखाग्र विस्तृतैर्वनभूमिषु ।
तत्फुल्लकुसुमामोदि शीतसुन्दरवायुभिः ।। २२ ।।

कङ्केलिकेलिपालीभिस्तथा गन्धफलिद्रुमैः ।
प्रत्यग्रकेसरभरै राजराजादनैरपि ।। २३ ।।

काकलीकोकिलालापैः कपोतशुकबर्हिणाम् ।
अत्यन्तसुन्दरतरं तद्वनं शुशुभेतराम् ।। २४ ।।

रम्यादर्शतलात्यच्छस्फाटिकोपलवेदिभिः ।
प्रवालपरिक्लृप्तोरुमण्टपे रत्नमञ्चगा ।। २५ ।।

स्कन्धलूनं वातभग्नपत्रं तच्छदमप्यणु ।
निष्कासयति सा गौरी नित्यं तत्र सखीगणैः ।। २६ ।।

रत्नबिल्वोरुमूलेषु चन्द्रस्फटिककल्पितम् ।
लिङ्गजालमहोत्तुङ्गमौलिसङ्गत सोमजैः ।। २७ ।।

किरणस्त्रावि सुजलैर्बिल्वैः पुष्पैः सुपूजितम् ।
तत्तीरे सरसो देव्या रत्नप्राकारमण्डितम् ।। २८ ।।

नवरत्नखण्डक्लृप्त स्तम्भविद्रुमपुत्रिकम् ।
चित्रवेदीतोरणाद्यैः पालितालिविराजितम् ।। २९ ।।

कपोतकुम्भपीठैश्च देवकोष्ठैश्च शोभितम् ।
रुद्रावतारचरितैर्मणिसुन्दरविग्रहैः ।। ३० ।।

तत्तत्स्थानेकसङ्कल्प[1] राजद्वृषभशोभितम् ।
प्राकारगोपुरोपेतं मण्टपान्तर्गृहं तथा ।। ३१ ।।

कुम्भोज्ज्वलन्महामौलिगर्भाकारैकसुन्दरम् ।
गोपुरापारशिखरं धूयमानपताककम् ।। ३२ ।

रम्यविद्रुममुक्तोरुसरैरालम्ब पीठकम् ।
मणिमाणिक्यखचितज्योतिभिः सुप्रभातकम् ।। ३३ ।।

गन्धचन्दनसिक्ताम्बु परिक्लिन्नतलं सदा ।
धूपैरगरुसम्भूतैर्गुग्गुलोद्दामसौरभैः ।। ३४ ।।

अखण्डघन कर्पूरदीपमालाविराजितम् ।
तत्रान्तर्गृहपीठस्थं योजनस्फटिकोज्जवलम् ।। ३५ ।।

लिङ्गं तदम्बिकेशाख्यं कैलासेश्वरपश्चिमे ।
देव्या मनोगृहान्तस्थादिव[2] तन्निर्गतं मुने ।। ३६ ।।

सुधांशुखण्डमौलिं च भोगिभोगफणावृतम् ।
धृतत्रिपुण्ड्रनिटिलं बिल्वालङ्कृतमस्तकम् ।। ३७

मन्दार पुण्डरीकाच्छमालामौलिमनोहरम् ।
सुचन्दनघनालेपं सुन्दरी पीठलेपितम् ।। ३८ ।।

---

1. तत्तत्स्थानक सङ्क्लृप्त
2. देव्या मनोगृहान्तःस्थपीठादिव विनिर्गतम् ।।

मणिप्रभामलमणिमौलिकान्तिविराजितम् ।
धूपपात्रैर्दीपपात्रैर्वरशङ्खसहस्रकैः ।। ३९ ।।

सहस्रदीपारार्तिक्यैर्मणिस्वर्णविनिर्मितैः ।
स्वहृत्पद्मे तदा देव्या ध्यातं तत्पुरतः क्षणात् ।। ४० ।।

अदर्शि दिव्यं देव्या च प्राकारवरगोपुरम् ।
रत्नगर्भगृहान्तःस्थं लिङ्गं तत्राम्बिकेशितुः ।। ४१ ।।

स्वदृशा दर्शयांचक्रे[1] देवी तत्राम्बिकेश्वरम् ।
दृष्ट्वा जहर्ष नितरामम्बिकेशं तदाम्बिका ।। ४२ ।।

प्रदक्षिणप्रक्रमणै रम्यमञ्जीरपादतः ।
पद्मारुण पदाकारि ततः सा सरसस्तटम् ।। ४३ ।।

ययौ मन्दं परिवृता स्वसखीगण[2] मध्यगा ।
तपसा परिखिन्नाङ्गी कृशा विद्युल्लतेव सा ।। ४४ ।।

अम्भोजिनीतटं प्राप्य सा सस्नौ मणिसप्रभे ।
अम्बा तीर्थजले गाह्य परिधाय दुकूलके ।। ४५ ।।

अत्यन्तसूक्ष्मे चन्द्राच्छकान्तकान्ति[3] सुवासिते ।
प्रक्षाल्य पाणिचरणे [4]स्वभृङ्गारुनीरतः ।। ४६ ।।

स्वर्णसिह्मासनासीना स्वसखीभिः परीवृता ।
स्नातां तां परिसेवन्ती[5] तथालिगणकोटयः ।। ४७ ।।

देव्या जटावेणिकान्त[6] परिक्लिन्नं तथां शुकैः ।
शुभ्रैः शिरोवेष्टयन्त्या[7] तथान्याः पादधावकाः ।। ४८ ।।

---

1. अपश्यदित्यर्थे । 2. स्वसखीभिः शिवाङ्गना । 3. कान्तिकान्ते । 4. स्वर्णभृङ्गारु । 5. परिसेवन्ते । 6. जटावेणिकां च । 7. वेष्टयन्त्यः ।

तथान्या जगृहुस्तत्र बालातपनिवारणे ।
छत्राण्यपि तथैवेन्दुधाममण्डल शोभिभिः ।। ४९ ।।

चामरैर्वीजयन्त्येनां तथा व्यजनवायुभिः ।
वीजयन्ति परिश्रान्तां चिराध्युष्टां तपोवने ।। ५० ।।

बालामबालकलनां धूपयन्त्यस्तथा जटाः ।
रत्नादर्शकरापार कज्जलानां च सम्पुटैः ।। ५१ ।।

पटवासैर्मुखामोदैः कर्पूरगुलिकादिभिः ।
(ताम्बूलपेटी वीटीभिस्तथा खेटधराःस्त्रियः
निषङ्गकार्मुका धरा)
ताम्बूलपेटीवीटीभिस्तथा कालाञ्जिकाकरैः ।। ५२ ।।

अरुणोत्तमकौसुम्भवस्त्रोद्धूलनकैः शिवाम् ।
खड्गकोशकराश्चान्यास्तथा खेटधराः स्त्रियः ।। ५३ ।।

निषङ्गकार्मुकधराः [1]शराधरकरास्तथा ।
स्त्रियः क्वणन्मणीदण्डबद्धालाम्बु[2]मणीन्द्रजैः ।। ५४ ।।

वीणापाणिमुखोद्घृष्ट[3]गायनैस्तां सिषेविरे ।
सखीपाणिधृतोत्तुङ्गरत्नादर्शविलोकनैः ।। ५५ ।।

धृतत्रिपुण्ड्ररुद्राक्ष भस्मपाण्डरविग्रहा ।
दधाना वाससी शुभ्रे भृङ्गारुकरपल्लवा ।। ५६ ।।

मणीन्द्रकल्पितमहापादुका ध्यस्तपादभूः ।
मन्दं मन्दं सखीवृन्दैः समायात्यम्बिकेश्वरम् ।। ५७ ।।

---

1. शरधाराकराः । 2. बद्धालाबू । 3. वीणाः पाणिमुखैधृष्यद् ।

स्वसखीविधृतापार रत्नकुम्भजलैर्धृतैः ।
सुवस्त्रपूतैः कर्पूरतगरागरुपाटलैः ।। ५८ ।।

सुवासितमहाकुम्भवक्त्रन्यस्ताम्रपल्लवैः ।
नारिङ्गमातुलिङ्गाम्रमोचाजम्बीरपानसैः ।। ५९

इक्षुद्राक्षाफलीगुच्छस्वच्छमोचाफलीकुलैः ।
हरिद्रारक्तधवलनालिकेरफलीभरैः ।। ६० ।।

रम्यपूगीफलाभारमातुलिङ्गकपित्थकैः ।
रत्नपात्रपरिक्लृप्तफलजालैरनेकशः ।। ६१ ।।

नागवल्लीदलानां च भारैर्गिरिशिखोपमैः ।
सहस्त्रारक्त सुदलफुल्लपङ्केरुहैस्तदा ।। ६२ ।।

फुल्लमन्दारजोद्दाम कर्णिकारबकैस्तथा ।
नीलनीलोत्पलानां च भारैः केकिशिरीषकैः ।। ६३ ।।

शम्यपामार्गदूर्वादिद्रोणार्ककुमुदैस्तथा ।
बन्धूकारक्तदाडिम्ब पुण्डरीकसुपाटलैः ।। ६४ ।।

बिल्वैरारक्तमधुर त्रिशाखाभरपूरितैः ।
पात्रीपात्रीकृता देवीमनुजग्मुः सहस्त्रशः ।। ६५ ।।

सुनीरपूरितघटसहस्त्रैः प्रययौ शिवा ।
छत्रचामरधारिण्यो वीणादर्शकरास्तथा ।। ६६ ।।

फलपल्लवराशीनां भारापारकरास्तथा ।
नानाशङ्खैः काहलीभिर्वेणुवीणामृदङ्गकान् ।। ६७ ।।

वादयन्ति पुरो देव्याः सख्यस्तत्र महेश्वरी ।
तदाम्बिकेशं सम्प्राप्य तद्गोपुरवराग्रतः ।। ६८ ।।

विसृज्य पादुके दिव्ये प्रक्षाल्य चरणद्वयम् ।
गर्भागारं महेशस्य प्रविश्याम्बाम्बिकेश्वरम् ।। ६९ ।।

नत्वोपविश्य चेलादिन्यासने[1] सुन्दराकृतिः ।
प्राणानायम्य सा देवी दध्यौ प्राणेश्वरं हृदि ।। ७० ।।

**स्कन्द उवाच**

ज्वलन्निटिललोचनं विषगलार्चिमेघाङ्गक-
प्रभातत[2]विराजितं जितमहेन्दुधामाननम् ।
पटे[3]भवरकृत्तिधृग्विधृतपोतचन्द्रं सरि-
ज्जटापटुकुटीरकोज्ज्वलितभोगिभोगाननम् ।। ७१ ।।

फणामणि विदीपितं [4]स्वहृदिपङ्कजाध्यासितं
दधार चिरमम्बिका तपनसोम सप्तार्चितः(?) ।
प्रकाशनयनत्विषं मधुहराक्षिपद्माङ्घ्रिकं
सुबालमृगटङ्कधृक्प्रथितबाहुदण्डानटम् ।। ७२ ।।

वराभयकराम्बुजं भसितपुण्ड्ररेखोज्ज्वलं ।
सुमन्दहसिताननं प्रणत[5]पक्वबिम्बाधरम् ।। ७३ ।।

।। इति श्री शिवरहस्ये द्वितीयांशे अम्बिकेश्वरपूजनं नाम
चतुर्थोऽध्यायः ।।

---

1. "चेलादिव्यापृते" इति पाठभेदः । 2. तति । 3. पुष्टेभ (पीनेभ) ।
4. निजहृदम्बुजाध्यासितम् । प्रणमतेति वक्तव्ये अथवा परिणतपक्व-
बिम्बाधरेति वक्तव्ये वा प्रयोगऽयम् । 5. परिणत ।

## ।। पञ्चमोऽध्यायः ।।

समाहितेन मनसा ध्यात्वैवं परमेश्वरम् ।
आवाहनं स्थापनं च सन्निधानं निरीक्षणम् ।। १ ।।

धेनुमुद्रां प्रदर्श्याथ पीठपूजां ततोद्विजाः ।
ध्यायेत्सदाशिवं साक्षाद्देवं सकलनिष्कलम् ।। २ ।।

शुद्धस्फटिकसङ्काशं त्रिणेत्रं शीतलद्युतिम् ।
विद्युद्वलयसङ्काशं जटामकुटभूषितम् ।। ३ ।।

शार्दूलचर्मवसनं किञ्चित्स्मितमुखाम्बुजम् ।
रक्तपद्मनदलप्रख्यपाणिपादतलाधरम् ।। ४ ।।

सर्वलक्षणसम्पन्नं सर्वाभरणभूषितम् ।
दिव्यायुधधरैर्युक्तं[1] दिव्यगन्धानुलेपनम् ।। ५ ।।

पञ्चवक्त्रं दशभुजं इन्दुखण्डशिखामणिम् ।
अस्य पूर्वमुखं सौम्यं बालसूर्यसमच्छविम् ।।६

त्रिलोचनारविन्दाढ्यं सोमधामर्धशेखरम् ।
दक्षिणं नीलजीमूतसमानरुचिरप्रभम् ।। ७ ।।

भ्रुकुटीकुटिलं घोरं रक्तवृत्तत्रिलोचनम् ।
दंष्ट्राकरालं विलसत्स्फुरिताधरपल्लवम् ।। ८ ।।

उत्तरं विद्रुमप्रख्यं नीलालकविभूषितम् ।
सविलासं त्रिणयनं चञ्चच्चन्द्रकलाधरम् ।. ९ ।।

---

1. धरं देवं

पश्चिमं सूर्यचन्द्राभं लोचनत्रितयोज्ज्वलम् ।
चन्द्ररेखाधरं सौम्यं मन्दस्मितमनोहरम् ।। १० ।।

पञ्चमं स्फटिकप्रख्यमिन्दुरेखाकलाधरम् ।
अतीव सौम्यमुत्फुल्लसोमसूर्यानलाक्षिकम् ।। ११ ।।

दक्षिणे शूलपरशुं वज्रखड्गानलोज्ज्वलम् ।
सव्ये परशुनाराचघण्टापाशाङ्कुशोज्ज्वलम् ।। १२ ।।

निवृत्या जानुसम्बद्धमानाभेश्च प्रतिष्ठया ।
आकण्ठं विद्यया तद्वदाललाटं तु शान्तया ।। १३ ।।

तदूर्ध्वं शान्त्यतीताख्यकलयाऽपारया तथा ।
पञ्चोर्ध्वं व्यापकं तस्मात्कलापञ्चकविग्रहम् ।। १४ ।।

ईशानमुत्कटं देवं पुरुषास्यं महेश्वरम् ।
अघोरहृदयं तद्वद्वामगुह्यं सदाशिवम् ।। १५ ।।

सद्योजातपदं मूर्तिमष्टत्रिंशत्कलामयम् ।
मातृकामयमीशानं पञ्चब्रह्ममयं तथा ।। १६ ।।

ओङ्काराख्यमयं चैव हंसशक्त्या समायुतम् ।
पञ्चाक्षरमयं देवं षडक्षरमयं तथा ।। १७ ।।

अङ्गषट्कमयं चैव सर्वज्ञानमयं तथा ।
सामान्यार्घ्यं विशेषार्घ्यं पञ्चपात्राष्टपात्रकम् ।। १८ ।।

पञ्चामृतैः पञ्चगव्यैः नीरपूरितकाञ्चनैः ।
घटैः फलरसैश्चैव दध्यक्षतकुशोदकैः ।। १९ ।।

यवैः सिद्धार्थकैर्युक्तो ह्यर्घ्यो देव्या प्रकल्पितः ।
शतधारामयैः पात्रैः सहस्त्रवरधारकैः ।। २० ।।

शङ्खैश्च दक्षिणावर्तैः सव्यावर्तैश्च श्रृङ्गकैः ।
संस्नाप्य शङ्खतोयेन प्रणवप्रोक्षणं क्रमात् ।। २१ ।।

भवे भवेति भव इत् पाद्यं आदौ प्रकल्पयेत् ।
रुद्राय नम इत्युक्त्वा दद्यादाचमनीयकम् ।। २२

वामदेवाय नम इति वस्त्रं तत्र प्रकल्पयेत् ।
ज्येष्ठाय नम इत्युक्त्वा दद्याद्यज्ञोपवीतकम् ।। २३ ।।

कनिष्ठाय नम इत्युक्त्वा पुनर्भस्मादि पादयेत्[1] ।
कालाय नम इत्युक्त्वा दद्याद्गन्धं सुगन्धितम् ।। २४ ।।

कलविकरणाय नम इत्यक्षतान्परिकल्पयेत् ।
बलविकरणायेति दद्यात्पुष्पाणि साम्बिका ।। २५ ।।

बलप्रमथनायेति धूपं दद्यान्मुने तदा ।
सर्वभूतदमनाय इति दीपं दद्यात्ततो द्विजाः ।। २६ ।।

मनोन्मनायेतिपरं नैवेद्यं च समर्पयेत् ।
ताम्बूलं चैव नीराजं तथोपचरणादिकम् ।। २७ ।।

सर्वं पञ्चाक्षरेणैव कुर्याद्देवी ततो मुने ।
अर्चयेत्परमं देवं प्रणवेन शिवेन च ।। २८ ।।

त्रियम्बकेण मन्त्रेण सर्वं तत्र प्रकल्पयेत् ।
आधारपीठपूजादि कृत्वा देवी महेश्वरी ।। २९ ।।

---

1. कल्पयेत्

पुनश्च विस्तरेणैव अम्बिकेशमपूजयत् ।
सखीभिश्च समानीतैः सम्भारैर्मनसा ततैः ।। ३० ।।

श्रृणु त्वं सावधानेन एकाग्रमनसा मुने ।
एवं हृत्पङ्कजे पूज्य बाह्येऽप्यम्बा प्रपूजयत्[1] ।। ३१ ।।

तत्रोद्वास्य च निर्माल्यं पूर्वपूजाप्रकल्पितम् ।
पञ्चाक्षरावृत्तिपरा पञ्चास्यध्यानतत्परा ।। ३२ ।।

स्वसखीकल्पितैश्चापि पूजाभारैश्च सुन्दरैः ।
अम्बिकेशं महालिङ्गं परिषिच्य प्रपूजयत्[2] ।। ३३ ।।

सुगन्धवरतैलजैर्वरघटैश्च देवी गवां
पयोनिभृतसद्घटैर्दधिजमण्डखण्डैर्घटैः ।
नवाज्यवरगन्धजप्रसृतमोदमाद्यद्घटैः
अक्षुद्रगतिदायिभिर्वरसुक्षौद्रधाराघटैः ।। ३४ ।।

वलक्षजमहेक्षुजप्रथितसारधारारस-
प्रकाशसितशर्करागिरिभिरीशलिङ्गेऽम्बिका ।
मधूत्थमधुपर्कतो मधुरपञ्चगव्यैः शिवैः
सुनाटिलजलार्पणैर्विमललिङ्गमौल्यम्बिका ।। ३५ ।।

अपारकदलीफलैलिकुचसारनीरैस्तदा
सुपानसजकोशकैर्मधुगलोरुपीतप्रभैः ।
तथेक्षुसुरसाजलैर्मधुरचन्दनोत्थैर्घटैः
गिरिस्रवझरीभरैर्गिरिशलिङ्गमम्बासिचत्[3] ।।

---

1 & 2. प्रापूजयत् इति वक्तव्ये । 3. अभिषेकं अकरोत् इत्यर्थे ।

सहस्रशतधारया मणिजकुम्भपीठोत्थया
सुरुद्रचमकैः शिवा वररथन्तरैर्वामकैः ।
सुधूपितगृहं विभोर्बहुलवाद्यसङ्घारवैः
दिशां श्रवणमङ्गलैर्वरसुशङ्खनादैरपि ।। ३७ ।।

जलन्धररवोपमैः पटहदुन्दुभीनां गणैः
मृदङ्गवरघोषकैर्विमलशीतवारां घटैः ।। ३८ ।।

अभिषिच्य भिषग्वरं महेशं
विमलैः पट्टदुकूलहेमवस्त्रैः ।
परिवेष्ट्यामलमम्बिकाम्बिकेशं
मृदुलैर्यक्षसुकर्दमैश्च गन्धैः ।। ३९ ।।

परिलिप्योत्तमतुङ्गलिङ्गमौलिं
विमला पीठतलं तदाम्बिकेशम् ।
करकर्पूरजखण्डदीपमाला-
मणिकान्तद्युतिभिर्धृतादिदीपैः ।। ४० ।।

अनेकरत्नोत्तमगोलकोद्य-
त्फणीफणाभ्राजितलिङ्गमौलिम् ।
हीरोत्थपुण्ड्राङ्कितफालदेशं
मणीसरालोलितमौक्तिकौधम् ।। ४१ ।।

नेपथ्यजालैर्वरपुष्पमाला-
बिल्वादिमालाकमलोरुमालैः ।
स मल्लिकाहल्लकमल्लिकुन्द(मालाशतै)-
मालाशतैर्गन्धफलीसरैश्च ।. ४२ ।।

सुपाटमोदितमालिकाभि-
रुत्फुल्लनीलोत्पलमालिकाभिः ।
मन्दारमालादिभिरम्बिकेश-
मम्बा समावेष्ट्य मुदं प्रपेदे ।। ४३ ।।

बिल्वानां च सहस्रकैश्च त्रिदलैरारक्तपङ्केरुहै-
र्मन्दारैर्वरचम्पकादिकुसुमैः सत्पुण्डरीकैः शिवा ।
नाम्नां चापि सहस्रकैश्च शतकैः सम्पूज्य हृष्टाऽभव-
त्पुण्यं लिङ्गमुमापतेः प्रियतरं धूपैस्तदाऽधूपयत् ।।

अगरूत्थामलगुग्गुली(लू)भिरीशा
वरसाम्राणिसुधूपवर्तिवृक्षपात्रैः ।
मणिदीपैर्वरचन्द्रखण्डदीपै-
र्घृतदीपैः सितवर्तितः सदोद्यत् ।। ४५ ।।

मधुरान्नादिसुराशिभिस्तदा
घृतसूपाकुलसोपदंशजालैः ।
फलजालैर्दधिपायसाज्ययुक्तै-
र्मधुरैर्भक्ष्यवरोत्थराशिजालैः ।। ४६ ।।

विनिवेद्य महेशमिष्टलिङ्गं
वरताम्बूलगिरिप्रचारपूरैः ।
विनिवेद्य सुगन्धगन्धयुक्तै-
र्वरतौर्यत्रिकहावभावलास्यैः ।। ४७ ।।

पदमञ्जीररणज्झणादिशब्दै-
र्मृदुवेणूरवतालशङ्खवादैः ।

मृदुमाद्यत्करतालदुन्दुभीनां
स्वनमद्दलकाहलोत्थनादैः ।। ४८ ।।

कलहंसगती सुयौवनोद्य-
त्तरुणीरुद्रगणाङ्गनादिक्लृप्तैः ।
अतिसोमसमानछत्रपङ्क्त्या ।
वरहंसोत्थसुपक्षपक्षशोभैः ।। ४९ ।।

परिदोधूय सुचामरोत्थवातै-
र्व्यजनैः पिञ्छविचित्रबर्हिजातैः ।
सुपताकततिप्रकाश्यमानै-
र्विविधैश्चित्रपटप्रकल्पितैः ।। ५० ।।

अतिसुन्दरकान्तिकान्त कान्तै-
र्मुकुरैर्दृष्टिपथे शिवस्य दत्वा ।
अतितोषतरोरुहर्षवर्षै-
र्नतिभिः प्रकमणैस्तदा सिषेवे ।। ५१ ।।

परिपूज्य शिवं प्रकृष्टवाचा
मधुरं स्तौति महेशमम्बिकेशम् ।
विमलोदार सुरुद्रवीणया
सिततुम्बीफलकान्ति(कान्त)तन्त्र्या ।। ५२ ।।

मधुरं गायति शम्भुनामजालं
नखनिक्वणनैर्मुदा तदा भवानी ।। ५३ ।।

देवी -

हर हर शङ्कर चन्द्रशेखर
प्रमथाधीश्वर विश्वनाथ शम्भो ।
करुणारसशोभिताङ्गा-
ङ्गदकाहीश्वर देव पाहि पाहि ।। ५४ ।।

अम्बिकेश गगनातिगमौले
लम्बितोरुजटयाखिलकाश ।
व्योमकेश विनतार्तिविनाश
नागभूष नगकार्मुकपाणे ।। ५५ ।।

हरिबाणामलपद्मनेत्र शम्भो
कृतदक्षाध्वरशिक्षवीक्षण ।
दग्धकामपुरवर्ग मदोद्य
त्कुम्भिकुम्भदलनामलपाद ।। ५६ ।।

गिरिराजसुतां जटोरुबन्ध
अव मां घोरतपोभिरुग्रदेहाम् ।
भव भीमोग्र कपालजालमालिन्
करशूलामलभूतिभूषिताङ्ग ।। ५७ ।।

त्वदपाङ्गतति प्रभूतकामा
किमिहेहामि तवादते(?)ऽहमद्य ।
गणनाथ षडाननादिसेव्य
प्रकटापार श्रुतीभिरीड्यपाद ।। ५८ ।।

दहरगगनसंस्थ विश्वधाम
प्रमथाधीश नतास्मि ते पदाब्जम् ।। ५९ ।।

**स्कन्दः**

इत्थं सम्पूज्य सा देवी कैलासाचलमूर्धनि ।
अम्बिकेशं महालिङ्गमम्बिकाभक्तितत्परा ।। ६० ।।

प्रणनाम मुहुर्भक्त्या दृष्ट्वा लिङ्गमुपातेः ।
महानन्दाम्बुधौ मग्ना नान्यज्जानाति किञ्चन ।। ६१ ।।

एवं तत्रार्चनरता द्वादशाब्दं किलाम्बिका ।
त्रिकालं सावधानेन प्रदोषेषु विशेषतः ।। ६२ ।।

महाकैलासशेलाग्रेचाम्बिकेशशिवालये ।
अपूजयत्तदा देवीचाम्बिकेशं द्विजोत्तम ।। ६३ ।।

नक्ताशनरता देवी स्वसखीभिः परीवृता ।
तरुणेन्दुकलामौलिलिङ्गं संपश्यती सदा ।। ६४ ।।

निनाय सा क्षपास्तत्र महादेवी सदा मुदा ।
स्वयं सखीभिः सहिता कुसुमापचयोद्यता ।। ६५ ।।

कैलासमौलिविपिने पुष्पसारयुते तदा ।
फुल्लानिनीषुः सततं[1] पङ्कजाहरणादरा ।। ६६ ।।

बिल्वकण्टकनुन्नापि स्वयमेवाहरच्छिवा ।
फलानि स्वादुभूतानि समाहृत्याम्बिकेश्वरे ।। ६७ ।।

---

1. फुल्लाब्जिनीषु सततं

निनेद्य स्नाति नियतं सखीभिः सहिता शिवा ।
यन्निवेदितमीशाने तदश्नाति कुतूहलात् ।। ६८ ।।

पवित्रं शिवनैवेद्यं ज्ञानप्रदमनुत्तमम् ।
जितामृतरसं स्वादु पापसङ्घविनाशनम् ।। ६९ ।।

आस्वाद्य शिवनैवेद्यं जलमन्नं फलादिकम् ।
देवी हृष्टतरा नित्यमष्टमूर्त्यर्चने रता ।। ७० ।।

स्वतपोत्थं कष्टजालं जहौ लिङ्गसमर्चनात् ।। ७१ ।।

देव्या कैलासमौलौ सततपरिचितापारपूजाप्रभावैः
तुष्टश्चैवाम्बिकेशो गुणगणसहितः प्रदुरासीन्महेशः ।
देवीं वीक्ष्य मुदाह गाढभुजकैरालिङ्ग्य धन्येऽम्बिके
को वेत्ति प्रभवं[1] ममेष्टदमहालिङ्गार्चनायाः फलम् ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे अम्बिकेशप्रदुर्भावो नाम पञ्चमोऽध्यायः ।।



1. प्रभवं - प्रभावम् ।

## ।। षष्ठोऽध्यायः ।।

**स्कन्द उवाच**

ततो देवीं महादेवः शिवश्चन्द्रकलाधरः ।
प्रतिपच्चन्द्रसङ्काशां तपसा तनुतां गताम् ।। १ ।।

शरद्घनौघतटिता सदृशामलविग्रहाम् ।
भस्मच्छन्नां त्रिपुण्ड्राङ्कफालभागमनोहराम् ।। २ ।।

पिशङ्गित महावेणीजटिलालकशोभिताम् ।
अवग्रहग्रहाकारां भूषाहीनां च सुन्दराम् ।। ३ ।।

वल्कलाजिन संवीतां रुद्राक्षामलकङ्कणाम् ।
भद्रां भद्रतराकारां सुधाधामसमाननाम् ।। ४ ।।

बाहुभ्यां पीनवृत्ताभ्यां तां देवीं प्रीतिमत्तरम् ।
गाढं तद्धृदये देवः प्रविष्ट इव सस्वजे ।। ५ ।।

स्वाङ्कसिह्मासनासीनां तां चकारामलेक्षणाम् ।
पस्पर्श शान्तमाभ्यां च पाणिभ्यां तां कृशाङ्गकाम् ।। ६ ।।

कमलोदरसौभाग्यरञ्जिताभ्यां महेश्वरः ।
सुधांशुवीक्षणोत्फुल्लनयनामृतशीकरैः ।। ७ ।।

प्लावयामास तां देवीमापादतलमस्तकम् ।
सुधारसवरस्यन्दि नयनेनातुलेन च ।। ८ ।।

कृपाकटाक्षतो वीक्ष्य त्र्यक्षो दाक्षायणीमुमाम् ।
शिवा शङ्करपाणिभ्यां संस्पृष्टा जगदम्बिका ।। ९ ।।

आनन्दवारिधिस्फारतरङ्ग इव सावृधत्
क्षीरोदधिरिवोद्दाम तरङ्गावलिभासुरः ।। १० ।।

चन्द्रोदयमिव प्राप्य गिरिजाऽऽनन्दिताऽभवत् ।
सञ्जातपुलका देवी आनन्दघनसुन्दरा ।। ११ ।।

प्रणनाम तदा देवी शङ्करं लोकशङ्करम् ।
स्पृशन्ती पाणिकमलैस्तत्पादाम्भोरुहद्वयम् ।। १२ ।।

जगदानन्दकन्दोद्यत्सुधामण्डलवच्छिवा ।
प्रणाममुखरां देवीं दोर्भ्यामुत्थाप्य शङ्करः ।। १३ ।।

स्वाङ्कमञ्चस्थितां देवीं चक्रे कैलाससौधगः ।
दिव्यसिह्मासनासीनो देवो देव्या मुनीश्वर ।। १४ ।।

प्राहालिङ्ग्य महादेवीं पुनः पुनरुमापतिः ।
स्पृशन्स्वपाणिना देव्या वदनाम्बुजमुत्तमम् ।। १५ ।।

स्विन्नं शङ्करसंस्पर्शदर्शनानन्दभासुरम् ।
पद्मिनीव तदोत्फुल्ल पङ्कजाकार सश्रियम् ।। १६ ।।

उद्यद्भानुकरास्पृष्ट कमलोत्फुल्लसोदरम् ।

**इश्वर उवाच -**

खिन्नासि तपसा गौरि जाने तव चिकीर्षितम् ।। १७ ।।

शिरीषमृदुला तेऽद्य तनुस्तापविशोषिता ।
भ्राजदारक्तकमलसोदरं तव वक्त्रकम् ।। १८ ।।

हिमसारपरिक्लिन्नपङ्कजोपममद्रिजे ।
वदनं पक्षयोश्चञ्चच्चन्द्रवन्न विराजते ।। १९ ।।

नीलालकमिदं सुभ्रु भस्मरेणुसुधूसरम् ।
वनप्रसूनरजसो वातानीतात्सुपाण्डरम् ।। २० ।।

जटालमिदमत्यन्तं त्वद्वेणीमण्डलं शिवे ।
वल्मीकबिलयातेव व्याल्यङ्गमिव धूसरम्[1] ।। २१ ।।

परिक्लिन्नमिदं भाति भूषणैर्हीनमप्युमे ।
रत्नकुण्डलसङ्क्लृप्ते श्रवणे ते विलासिनि ।। २२ ।।

रुद्राक्षमुक्तिकायुक्तकुण्डलाभ्यां विभूषिते ।
तपसाकल्पकेनापि तपोमूर्तिर्विराजसे ।। २३ ।।

द्विजराजसमानास्ये सुनसे तेऽद्यनासिका ।
रत्नक्लृप्तमहामुक्ताविहीनापि विशोभते ।। २४ ।।

त्वद्वक्त्रमण्डलं देवि सिन्दूरतिलकान्वितम् ।
भस्मत्रिपुण्ड्रतो भाति वदनं तिलकोज्झितम् ।। २५ ।।

त्वत्कण्ठमण्डलं मुक्तासरहीनमपि प्रिये ।
रुद्राक्षमाला जालैश्च नितरामयि भासते ।। २६ ।।

अपर्णे पर्णवसनैः कथं क्लिष्टा हिमागमे ।
प्रचण्डसूर्यकिरणैः सोमजैरपि शङ्करि ।। २७ ।।

ऋतुभिर्वातवर्षैश्च परिक्लिष्टासि शैलजे ।
बिल्वार्चनेन ते पाणिः किणितः कण्टकेन हि ।। २८ ।।

---

1. वल्मीकबिलसंयात व्याल्यङ्गमिव धूसरम् ।।

त्वत्पाणिस्पर्शनेनाद्य धन्या वृक्षाः सुपुष्पिताः ।
त्वत्पादपङ्कजस्पर्शैः केलासोऽयं नगेन्द्रजे ।। २९ ।।

धन्यधुर्यत्वमापन्नो दैवैर्मान्यः सदा गिरिः ।
तवाङ्गमिदमत्यन्तं सुकुमारतरं शिवे ।। ३० ।।

तपसाऽतीव सन्तप्तं तपसामेकनायिके ।
बिम्बोपमाधरेणाद्य त्वया जिह्वाग्रतो मम ।। ३१ ।।

पञ्चाक्षरी सदा जप्ता रुद्रोऽप्यावर्तितः सदा ।
त्वया स धन्यो मनुराट् रुद्रो वेदेषु भासुरः ।। ३२ ।।

तव क्रीडेयमतुला लोकशिक्षार्थमम्बिके ।
त्यक्त्वा त्वया [1]राङ्कवादिवरास्तरण सन्ततिः ।। ३३ ।।

मञ्चेषु रत्नसौधेषु दीपधूपोद्यतेषु च ।
शोभितेषु मणिप्रोद्यत्सौधवातायनस्थिता ।। ३४ ।।

नगाग्रमौलिकठिनभूभस्मस्थानगा सदा ।
मालूरलूनपत्रैश्च वातपोतप्रपातितैः ।। ३५ ।।

परिक्लिष्टासि नितरां तापसीव नगेन्द्रजे ।
त्वया नविदितं किञ्चित् त्रिषु लोकेषु विद्यते ।। ३६ ।।

त्वमेव तपसां देवि फलदानोन्मुखी सदा ।
त्वत्पादाम्बुरुहध्यानैः सर्वैः प्रापि मनोरथः ।। ३७ ।।

ब्रह्मविष्ण्वादिविबुधैः प्रमथैर्मुनिभिः शिवे ।
त्वया ततमिदं विश्वं त्वत्कटाक्षैकभासुरम् ।। ३८ ।।

---

1. राङ्कव = ऐणेयाजिनादि

सदेवासुरमुत्कृष्टं नानावननगाश्रयम् ।
लोकजालमिदं भद्रे त्वया सृष्टं सनातने ।। ३९ ।।

त्वयैव पालितं चान्ते त्वय्येव लयमेवष्यति ।
त्वत्कृपापाङ्गसङ्गेन सर्वेषामणिमादयः ।। ४० ।।

सिध्यन्ति सिद्धयश्चाष्टौ तेन धन्या गुणाधिकाः ।
त एव सर्वभाग्यानामाकरास्ते सदोज्ज्वलाः ।। ४१ ।।

त एव सुकृतां सङ्घैः पूरिताः श्रीयुताश्च ते ।
ये वै त्वदीक्षणाहीना[1] निर्भाग्याः पापवत्तराः ।। ४२ ।।

विशन्ति नरकं घोरं सदा दुःखैकभागिनः ।
तवैव निमिषोन्मेषौ जगतां प्रलयोदयौ ।। ४३ ।।

त्वं श्रुतिः परमा देवी त्वं वै श्रुतिरनुत्तमा ।
त्वं पृथ्वी सलिलं व्योम त्वं वायुः सोम एव च ।। ४४ ।।

घनद्रवव्यापकत्वं चलनं दीप्तयः सदा ।
भूतेषु शक्तिरसि वै त्वया ततमिदं जगत् ।। ४५ ।।

त्वच्छक्तिहीनं च सदा जडतामुपगच्छति ।
सूर्ये मरीचिका शक्तिः शीतभानौ हि शीतजा ।. ४६ ।।

दाहकत्वं यथा वह्नौ पवने चलनात्मिका ।
सम्पच्छक्तिस्तथैवेन्द्रे [2]वरुणेऽपांपतित्वता ।। ४७ ।।

---

1. ईक्षणशब्दस्य स्त्रीत्वमार्षम् । त्वदीक्षारहिता इत्यपि युज्यते ।।
2. अपां पतित्वतेति पतिशब्दात्त्वतलोरुभयोरपि भावार्थे प्रयोगः ।।

ईशाने वा महाशक्तिः पालिनीत्वं जनार्दने ।
विधौ वै सर्गिकी शक्ति(क्ती) रुद्रे शक्तिस्तिरोधकृत् ।। ४८

सदाशिवेऽनुग्रहदा त्वत्त एवास्मि शक्तिमान् ।
अहमप्यन्ततो देवि सर्वं त्वच्छक्तिवैभवम् ।। ४९ ।।

येषु येषु च भूतेषु या या शक्तिरनुत्तमा ।
सर्वासि सर्वशक्तीनां आधारा त्वं सनातनी ।। ५० ।।

शान्तिः पुष्टिर्धृतिः स्वाहा स्वधा त्वं परमेश्वरि ।
त्वयैव सृज्यते विश्वं त्वया पालितमेव हि ।। ५१ ।।

त्वय्येवान्ते प्रविशति त्वया ततमिदं सदा ।
त्वत्कृपापाङ्गतो हीनमशक्तं भाति मे जगत् ।। ५२ ।।

माया त्वं तव मायोत्था लोकाः सर्वे चराचराः ।
ब्रह्माण्डकोटयो देवि विधिविष्णुमहेश्वराः ।। ५३ ।।

इन्द्राः समनवो विप्राः पितरो देवतागणाः ।
ध्रुवा धारागृहाः सर्वे स्वर्गनारकसङ्गतिः ।। ५४ ।।

देवतिर्यङ्मनुष्याद्या यातायातपरायणाः ।
कार्पासचक्रजालात्तसूत्राधोर्ध्वगता इव ।। ५५ ।।

तैलिकागारवृषवन्मेरुमौलौ ग्रहर्षयः ।
भ्रमन्ति मायया तेऽद्य अनित्ये नित्यमानिनः ।। ५६ ।।

सुखदुःख समासक्ताः कामक्रोधपरायणाः ।
मोहान्धितमिदं विश्वं धर्माधर्मादिपाशकैः ।। ५७ ।।

वर्णाश्रममहादुःखधर्मैरत्यन्तमोहितम् ।
आत्मानं मामविज्ञाय जातिदेहाभिमानिनः ।। ५८ ।।

आहारभयनिद्रादियोनिभोगर्धिदूषितम् ।
जन्मनाशैकबहुलं षडूर्मिविकलं जगत् ।। ५९ ।।

देवतिर्यक्सुरनरतिर्यगत्यन्तदुःखितम् ।
पशुभूतमिदं देवि त्वन्मायाशक्तिवैभवैः ।। ६० ।।

त्वद्दयामोचितं देवि यदि स्याततपस्यया ।
शक्तिद्वयोज्झितं देवि भविष्यति किलामले ।। ६१ ।।

तादृशी त्वं पराशक्तिर्मदनन्यापि शङ्करी ।
तपोरतासि देवेशि तव किं तपसाम्बिके ।। ६२ ।।

**सूत उवाच**

देवीं प्राह महेश्वरस्त्रिजगतामाधारभूतो हरः
इत्थं कैलासमौलौ सुरवरमुनिभिर्वर्जितेमत्प्रभावात् ।
एतल्लिङ्गसमर्चनेन यदि मे सर्वेषु लोकेष्वपि
तस्मादप्यमितं विमुक्तिदमतः कैलासमौलौ कृतम् ।।

एतल्लिङ्गसमर्चनार्जितमहापुण्याम्बुधेः पारगा
त्वन्नाम्ना प्रथितं त्रिलोकजननी दृष्ट्वाम्बिकेशं त्वहम् ।
तुष्टोऽत्यन्तदयारसैकहृदयः किं देयमस्त्यम्बिके
त्वत्तो नान्यदिदं जगत्सुरनरं त्वं शङ्करीवासि मे ।।

।। इति श्री शिवरहस्ये द्वितीयांशे शिवगौरीसंवादे षष्ठोऽध्यायः ।।

## ।। सप्तमोऽध्यायः ।।

**स्कन्द उवाच**

इत्युक्ता शङ्करेणाथ प्राञ्जलिः परमेश्वरी ।
प्राह प्रणम्य देवेशं भगवन्तं महेश्वरी ।। १ ।।

तुष्टाव हृष्टा कान्तं स्वमष्टमूर्तिं कृपाकरम् ।।
शिपिविष्टं कष्टनाशं पुष्टा देवी हृदा तदा ।। २ ।।

**देवी**

श्रीशङ्कर प्रियजनामलवेदगीत
विष्ण्वब्जजार्चितमहामहिमेश्वर त्वम् ।
पाहीश मामकधिया शशिखण्डमौले
भक्तां त्वनन्यकरुणारसवीक्षणेन ।। ३ ।।

हे शङ्कर स्मरहरान्धकसूदनेश
विश्वेशभर्ग भगनेत्र निशाटनेश ।
पाहीश मामकधिया शशिखण्डमौले
भक्तां त्वनन्यकरुणारसवीक्षणेन ।। ४ ।।

गङ्गाधर प्रमथनाथ पिनाकपाणे
मार्तण्डनन्दन हराव्यय दीनबन्धो ।
पाहीश मामकधिया शशिखण्डमौले
भक्तां त्वनन्यकरुणारसवीक्षणेन ।। ५ ।।

षड्वक्त्रसिन्धुरवराननन्दितेन्दु-
नेत्रोरुलोकन महेश्वर दक्षशिक्ष ।
पाहीश मामकधिया शशिखण्डमौले
भक्तां त्वनन्यकरुणारसवीक्षणेन ।। ६ ।।

इति संस्तुत्य सा देवी प्राञ्जलिः प्राणमच्छिवम् ।
त्वत्सङ्गताहं देवेश शक्तिरस्मि सनातनी ।। ७ ।।

सृजामीदं जगज्जालं सर्वदेवासुरत्मकम् ।
नदीनदगिरिद्वीपसमुद्रैर्भूतवर्गकैः ।। ८ ।।

तथापि देहधर्मात्तप्रणयेनाहमीश्वर ।
लोकस्यानुग्रहं कर्तुं तपः कृतमहो[1] शिव ।। ९ ।।

स्वतन्त्रापि भवेन्नारीतया भर्तृप्रसादतः ।
कृतसर्वक्रियापीश राजतेऽत्यन्तमुत्कटम् ।। १० ।।

तीर्थयात्रां व्रतारम्भं लिङ्गार्चामपि प्रभो ।
भर्त्रा चानुमता नारी कृत्वा पुण्यमवाप्नुयात् ।। ११ ।।

तथापि लोकगुप्त्यर्थं क्रीडेयं मम शङ्कर ।
नावयोर्विद्यते भेदश्चन्द्रच्चन्द्रिकयोरिव ।। १२ ।।

आवाभ्यां (आवयोः)मनुते भेदं स एव नरगर्दभः ।
तव कैलासवसतेरुत्कण्ठं सुन्दरं शिवम् ।। १३ ।।

मया त्वया योगिनीभि(भी)रमणाक्रीडमुत्तमम् ।
तत्स्थानं कल्पनीयं मे नान्यः कामोऽद्य विद्यते ।। १४ ।।

---

1. कृतवती

कामाङ्गदाहपादाब्जध्यानतो नैव कामिता ।
त्वदीयालोककामेन कामः सञ्जीवितो मया ।। १५ ।।

तथा वदन्त्यामम्बायां देवः प्राह महेश्वरः ।

**ईश्वर उवाच**

किमशक्यमिदं देवि जगन्निर्माणम(प)ण्डिते ।। १६ ।।

न किं त्वत्स्मृतिमात्रेण भवत्या कल्पितं यदि ।
तदेव मे कान्ततरं विहारवरमद्रिजे ।। १७ ।।

तस्मादुपक्रमः किन्नु चीयते तपसि स्थितिः ।
किन्त्वेकं मम कैलासे तव हृत्पद्मसद्मकम् ।। १८ ।।

बहिस्तन्निर्गतं देवि चाम्बिकेशाख्यमुत्तमम् ।
लिङ्गं मङ्गलदं मेऽद्य तेन कान्ततरो नगः ।। १९ ।।

योऽम्बिकेशमहाधाम मौलिकुम्भाग्रलोचनः ।
त्रिलोचनो हि भवति तथाऽन्ये च द्विलोचनाः ।। २० ।।

दृष्ट्वा त्वत्पूजितं लिङ्गंमम्बिकेशाख्यमम्बिके ।
नान्यत्र रमते चेतो यथा त्वद्गात्र सङ्गमात् ।। २१ ।।

तथा मे लिङ्गसङ्गेन त्वदीये परमेश्वरि ।
अतः कैलासलिङ्गेषु श्रेष्टमेतत्सनातनम् ।। २२ ।।

प्रोत्फुल्लं मानसाब्जं मे दृष्ट्वा लिङ्गमिदं तव ।
इत्युक्त्वा हर्षविवशो गाढमालिङ्ग्य तां शिवाम् ।। २३ ।।

सुस्नातां तां तदा देवीं दिव्यसिह्मासनाश्रिताम् ।
भूषाभिर्भूषयामास मकुटेनार्करोचिषा ।। २४ ।।

सुधाधामेन्दुखण्डोद्यद्धीरमुक्तासरावृताम् ।
नूपुरैरङ्गदैर्देवः स्वयं देवीमभूषयत् ।। २५ ।।

नखाग्रैस्तज्जटालोलवेणीजालं विमुच्य वै ।
रत्नचूडामणिव्रातैरभूषयदुमापतिः ।। २६ ।।

चन्दनागरुकर्पूरैर्देव्यङ्गं पर्यलेपयत् ।
कुसुम्भकान्ति विद्योतिकोटिबालार्कवर्चसम् ।। २७ ।।

वसनैर्वासयाञ्चक्रे निचोलेनापि शङ्करः ।
धूपैर्दीपैः सुमोद्दामगुम्फैः कचविराजितैः ।। २८ ।।

ताम्बूलजालैः सुभगैर्नानाफलवराशनैः ।
स्वर्णपात्रपरिक्लृप्तैः स्वयं देव्या महेश्वरः ।। २९ ।।

बुभुजे नन्दितहृदा स्वयं देव्या महेश्वरः ।
देव्यास्तद्वदनाम्भोजे फलखण्डानि शङ्करः ।। ३० ।।

भुङ्क्ष्वेति तपसा गौरीं(रि) स दैवानशनेन च ।
चिरं क्लिष्टासि धन्यासि मान्यासि च सुरासुरैः ।। ३१ ।।

इदं कैलासलिङ्गस्य नैवेद्यं भक्ष्यभोज्यकम् ।
भुङ्क्ष्वाम्बिकेशलिङ्गस्य नैवेद्यं मधुरं मृदु ।। ३२ ।।

यो नैवेद्यं महेशस्य भुक्त्वा सन्तुष्टमानसः ।
स सर्वतपसां राशिं योगयागफलं शिवे ।। ३३ ।।

प्राप्नोति मुक्तिसाम्राज्यं किमन्यत्तपसा शिवे ।
तस्माद्भुङ्क्ष्व महेशस्य नैवेद्यं मधुरं मृदु ।। ३४ ।।

नाभक्तैर्भोज्यमेतद्वै भक्तैर्भोज्यं सदैव हि ।
इत्युक्त्वा भोजयामास नैवेद्यैः फलमण्डलैः ।। ३५ ।।

प्रक्षाल्य हस्तचरणौ देवो देव्या महेश्वरः ।
परार्घ्यास्तरणास्तीर्णे सोपधानोरुमञ्चके ।। ३६ ।।

कैलासे हीरमणिजे सौधे दिक्तटधूपिते ।
निषण्णश्चाम्बया देवो ताम्बूलं चाप्यगृह्णत ।। ३७ ।।

ताम्बूलशतधाराभिः सन्तृप्तां परमेश्वरीम् ।
पस्पर्श पाणिना देवो देव्या वदनपङ्कजम् ।। ३८ ।।

क्लिष्टासीति च पाणिभ्यां मुहुर्मुहुरनन्यधीः ।
सखीगणकरापारव्यजनैस्तामवीजयत् ।। ३९ ।।

एवं संवत्सरगणान् क्रीडन्तौ नगमूर्धनि ।
नानाहारविहारैश्च स्वतन्त्रौ परमेश्वरौ ।। ४० ।।

कैलासमौलि सौधेषु रम्यसानुवनेष्वपि ।
सरःसु विमलोदारपद्महल्लकशोभिषु ।। ४१ ।।

लिङ्गालयेषु पुण्येषु लिङ्गपूजापरौ शिवौ ।
लिङ्गसन्दर्शनापारकौतुकौ परमेश्वरौ ।। ४२ ।।

मृगपक्षिगणानां च दर्शनाप्यायितान्तरौ ।
प्रफुल्लवनसञ्चारक्रीडन्मातङ्गसन्निधौ ।। ४३ ।।

रुद्राणीकरजालोत्थवाद्यनृत्तावलोककौ ।
रम्यस्वच्छसुधाम्भोधौ नौकाक्रीडापरायणौ ।। ४४ ।।

सरुद्रवीणानिनदैस्तुष्टौ हृष्टतरौ शिवौ ।
सोमधामकरासारनिशासु नगमूर्धनि ।। ४५ ।।

दिव्यक्रीडारसभरैः क्रीडतुस्तौ सदाशिवौ ।। ४६ ।।

नानादेवयुगादि वर्तनमहाकालातिगौ तत्र तौ
को वा वेत्ति महेशदिव्यचरितं प्रोक्तं हि सङ्क्षेपतः ।। ४७

।। इति श्रीशिवरहस्ये द्वितीयांशे देवीसान्त्वनं नाम सप्तमोऽध्यायः ।।



## ।। अष्टमोऽध्यायः ।।

**स्कन्द उवाच**

श्रृणु दिव्यचरित्रं त्वं महेशस्य त्रिशूलिनः ।
निटिलेचित्रभानोश्च पापसङ्घनिबर्हणम् ।। १ ।।

सावधानमना विप्र जैगीषव्य महामते ।
मणिद्वीपस्य चोत्पत्तिं विस्तराद्‌गदतो मम ।। २ ।।

याः कथा मुनयः श्रुत्वा गणा अपि सुरोत्तमाः ।
भद्राणि प्राप्नुवन्त्येव स्थानं विन्देत्सुदूरगः ।। ३ ।।

**सूतः (उवाच)**

पुनः प्रणम्य सा देवी प्राह भर्तारमीक्षती ।
मनसा सुप्रसन्नेन उत्फुल्लाननपङ्कजा ।। ४ ।।

पद्‌मकोशनिभाभ्यां साशयाभ्यां प्राञ्जलिः शिवा ।
स्वाशयं विवशं तस्मै सा जगाद त्रिशूलिने ।। ५ ।।

दर्शयन्तीव सा देवी प्राह देवं घृणानिधिम् ।
रोमाञ्चकञ्चुकवती महाप्रणयगर्भिणी ।। ६ ।।

चार्वक्षी तं विरूपाक्षमक्षदूरं तदैक्षत ।

**देव्युवाच**

देव देव महादेव लीलाललितविग्रह ।। ७ ।।

खट्वाङ्गपाणे भगवन् इभाजिनधराव्यय ।
चारुचन्द्रकलामौले नागहाराङ्गभूषण ।। ८ ।।

प्रमथाधीश मन्नाथ लोकनाथ जगत्पते ।
जगन्मयाव्ययापारक्षितिरक्षणनाशक ।। ९ ।।

किं तवाद्य विलम्बेन साम्ब शम्भो वदाधुना ।
विचित्रशक्ते भगवंस्त्वया मे स्थानमुत्तमम् ।। १० ।।

सुन्दरात्सुन्दरं शम्भो आनन्दामृतसागरम् ।
न क्षुप्तिपासे न ग्लानिः न तृषा न जरादिकम् ।। ११ ।।

तत्र स्थितानां सर्वेषां कैलासादपि सुन्दरम् ।
सृज विश्वेश दयया ममैवापारकोतुकम् ।। १२ ।।

न सृष्टौ न विधात्रापि विष्णुना वा तथोत्तरम् ।
स्रष्टुं शक्यं त्वया देव मनसैव महेश्वर ।। १३ ।।

त्वया हि भारते खण्डे सृष्टमानन्दकाननम् ।
त्रिविष्टपं च वैकुण्ठं सत्यलोकमपि प्रभो ।। १४ ।।

नार्हन्ति तुलनां तस्य लोका अपि चतुर्दश ।
तत्र त्वं लिङ्गरूपेण विश्वेशाख्येन राजसे ।। १५ ।।

अन्नपूर्णा सदैवाहं तत्र भक्तान्नदायिनी ।
तत्रान्ते सर्वजन्तूनां मुक्तिं नित्यां प्रयच्छसि ।। १६ ।।

लोकोत्तरं ते चरितं किं तवानुकृतिं सुराः ।
पामराः कल्पयिष्यन्ति न त्वष्टा न मयोऽपि हि ।। १७ ।।

तवान्या निर्मितिःशम्भो साक्षात्कारणमुत्तमम् ।
त्वयैवेदं जगज्जालं पुरा सृष्टं महेश्वर ।। १८ ।।

रुद्राणां कोटयः शम्भो जरामरणवर्जिताः ।
चन्द्रोत्तंसाः कपर्दोरुमौलयो भस्मभूषिताः ।। १९ ।।

त्रिशूलोद्यत्करा देव तव लीलावलोकनैः ।
दिव्यन्तरिक्षपातालं तान्दृष्ट्वैव विधिर्भयात् ।। २० ।।

त्वां च संप्रार्थयामास मा ते भूत्सृष्टिरिदृशी ।
तद्वाक्यानन्तरं शम्भोः स्थाणुत्वं प्राप्तमीश्वर ।। २१ ।।

त्वयैवोक्तं(क्तो)विधिः सृष्टौ सृज त्वमशुभाः प्रजाः ।
जरामरणधर्मिण्यो नाहं स्रक्ष्येऽशुभाः प्रजाः ।। २२ ।।

त्वं सर्वमङ्गलाकारस्तस्मात्स्थानवरं मम ।
लोकोत्तरं महादेव विहारं चावयोः सदा ।। २३ ।।

सृजैव मनसा देव मत्प्रियार्थं महेश्वर ।
इति देव्या महादेवः प्रार्थितः स तदा मुदा ।। २४ ।।

जातहर्षः स्वशीर्ष्णा तां ओं इत्यान्दोलयन्मुदा ।
परमानन्दसन्दोहसागरान्तर्निमग्नधीः ।। २५ ।।

क्षणं दध्यौ महादेवो लीलासृष्टिप्रवर्तकः ।
तत्क्षणाद्भास्वरं तेजः समुत्तस्थौ सुधाम्बुधेः ।। २६ ।।

कोटिभास्करसङ्काशं पार्वणेन्दुशताधिकम् ।
विद्युत्कोटिप्रतीकाशं इन्द्रचापायुतोत्तरम् ।। २७ ।।

वलक्षं भासिताकाशं ज्योतिर्मयमनुत्तमम् ।
तत्प्रभाभासिता लोका भुवनानि चतुर्दश ।। २८ ।।

ब्रह्मा विष्णुर्हरः शक्रस्तथैव मरुतां गणाः ।
गन्धर्वा गरूडाः सिद्धास्तथैव च वराप्सराः[1] ।। २९ ।।

लोकपालास्तथा यक्षा ग्रहास्तारा मुनीश्वराः ।
अत्यन्तविस्मिता भीतास्ते पश्यन्ति स्वलोकगाः ।। ३० ।।

किमेतदित्यहोऽकाण्डे तेजः पुञ्जं दुरासदम् ।
देवानां च सुराणां च सर्वेषां नो भयावहम् ।। ३१ ।।

पुरा सुरासुरैश्चैव मथितः क्षीरवारिधिः ।
समुत्पन्नं कालकूटं देवानां तु भयावहम् ।। ३२ ।।

तत्कीलदग्धसर्वाङ्गा महेशेन प्रसादिताः ।
गरं भक्षयता तेन महेशेनामितात्मना ।। ३३ ।।

अन्धकोत्थमहाभीत्या शङ्करेणैव रक्षिताः ।
त्रिपुराणां भयाच्चैव तेनेशेन विमोचिताः ।। ३४ ।।

वयं शरण्यं शरणमनुयास्याम शङ्करम् ।
इति ब्रह्मादयो देवा मेरुमौलौ स्थिताः सदा ।। ३५ ।।

कृताञ्जलिपुटाः सर्वे कैलासस्थं महेश्वरम् ।
तुष्टुवुः परया भक्त्या ब्रह्मविष्णुहरामराः ।। ३६ ।।

---

1. अप्सरस इत्यर्थेऽयं प्रयोगः

**देवा उवाच**

जय जय शङ्कर चन्द्रशेखर
प्रमथाधीश्वर चारुचन्द्रचूड
जय जय निगमादिवन्द्यपादो-
ज्वलितानलफाललोचनाव नः ।। ३७ ।।

जय जय गजचर्मशोभिताङ्ग
जय जय विश्वविधान शूलपाणे
जय जय त्रिपुरान्तकेश शम्भो
जय जय शान्त शशाङ्कचारुमौले ।। ३८ ।।

जय जय तटिनी जटोत्तमाङ्ग
जय काकोदर वीरहार शम्भो ।
गरकन्धर भूधरोरुवास[1]
त्रिजगत्तापहराव्ययेश देव ।। ३९ ।।

जय जय जगदीश दीनबन्धो
मधुवैरिप्रकटाक्षिपूज्यपाद ।
जय जय मारहरात्तशूलपाणे
प्रमथाधीश्वर पाहि भीतितोऽद्य नः ।। ४० ।।

जय जय विबुधार्तिनाशलोक[2]
जय जय भस्मविभूषणेषु तुष्ट ।
प्रसभं कष्टमपाकुरुष्व शम्भो
गिरिजानाथ सनाथ पाहि नस्त्वम् ।। ४१ ।।

---

1. उरुभूधरवासेत्यर्थे ।    2. विबुधलोकार्तिनाशकेत्यर्थे ।

स्कन्दः (उवाच)

इति विबुधजनोत्थघोषवर्य<br>
श्रवणापारसुखस्तवं महेशः ।<br>
परिशुश्राव नगाधिपोरुमौलौ<br>
गिरिजामीक्ष्य तदन्तिकां च दूतीम् ।। ४२

समलोकयदाशु चारुदृष्ट्या<br>
हिमधामोत्तरया सुचारुचन्द्रचूडः ।<br>
किमिदं प्रसभं स्तवोरुघोषं<br>
कथयाद्येति विचार्य नन्दिनं त्वम् ।। ४३ ।।

द्रुतमायाहि सखीत्यवोच-<br>
द्गिरिजाजानितदिङ्गितेक्षणेन ।<br>
गिरिराजात्मजया तदाभ्यनुज्ञा-<br>
मधिवाप्यैव[1] सखी ततो द्रुतं सा ।। ४४ ।।

कैलासामलहीरसौधतलतो याता द्रुतंनन्दिनं<br>
राजद्वारललच्चलाचलगतिर्दिव्याङ्गरागोज्ज्वला ।<br>
नत्वा शम्भुपदाम्बुजं च गिरिजा सा वैजयन्तीमिव<br>
ज्योतिः क्लिन्नदिशामुखोज्जवलयुता सा राजयन्ती सखी ।।

।। इति श्री शिवरहस्ये द्वितीयांशे देवस्तवेऽष्टमोऽध्यायः ।।

---

1. अध्यवाप्येत्यर्थे ।

## ।। नवमोऽध्यायः ।।

**स्कन्दः (उवाच)**

इति घोषं महच्छ्रुत्वा मेरुमूर्धनि शङ्करः ।
स्तुवतां देवसङ्घानां अगजाजानिरीश्वरः ।। १ ।।

सखीं देव्यास्तदा देवः कटाक्षेण कटाक्षकृत्[1] ।
सा जयन्ती तदा देवीं वीक्ष्य देवानुमोदिता ।। २ ।।

नत्वा द्रुतं समभ्यागात्कैलासे हीरसौधतः ।
पूर्वगोपुरभागाग्रसौधमध्यस्थितं द्विजाः ।। ३ ।।

नन्दिकेशं महात्मानं भस्माभ्यक्तं सदैव हि ।
दिव्यत्रिपुण्ड्रविलसच्चन्द्रोज्ज्वलकिरीटकम् ।। ४ ।।

स्वर्णवेत्रलसद्धस्तं गणकोटिपरीवृतम् ।
सिह्मासनस्थं वरदं जयन्ती तं ददर्श हि ।। ५ ।।

तां दृष्ट्वा नन्दिकेशोऽपि अभ्युत्थायासनाद् द्रुतम् ।
सम्पूज्य तां वैजयन्तीं स्थानमानासनार्हणैः ।। ६ ।।

समास्य तामथोवाच नन्दिकेशः शिवासखीम् ।

**नन्दिकेशः (उवाच)**

कोऽयमभ्युदयः कालो जयन्ति तव दर्शनात् ।। ७

चिराय भवतीं दृष्ट्वा तुष्टं मेऽद्य मनो भृशम् ।
विनष्टाऽशुभसङ्घोऽस्मि अष्टमूर्तिप्रसादतः ।। ८ ।।

---

1. अकटाक्षयदिति क्रियाशब्दप्रयोगः युक्तो भाति ।

को वाद्यावसरो देव्या देवस्याख्याहि मेऽधुना ।
किमाज्ञप्तं महेशेन देव्या वा तद्वदाद्य माम् ।। ९ ।।

तत्साधयामि शिरसा मा ते कालात्ययः सखि ।
ततो नन्दीश्वरं प्राह जयन्ती सा गणेश्वरम् ।। १० ।।

**जयन्ती (उवाच)**

महाकैलासमौलिस्थहीरागाराग्रसौधके ।
सर्वावासोऽपि भगवानध्यास्ते च सहाम्बया ।। ११ ।।

देव्याः स्थानवरं चापि चिन्तितक्षणमात्रतः ।
त्र्यक्षेण मनसा तस्माज्जातं तत्तेजसां गणम् ।। १२ ।।

ततः किं वा मेरुमौलौ घोषः समजनि द्रुतम् ।
तच्छ्रुत्वा देवदेवेशो मामपश्यच्छिवान्तिगाम्[1] ।। १३ ।।

शिवयाऽऽज्ञापि च ततस्तत्र गन्तुं शिवस्य हि ।
रथोऽपि सज्जतामाशु यच्छीघ्रं ते गणेश्वर ।। १४ ।।

किं चिरायसि देवाज्ञां अविलम्बेन साधय ।
तदा जयन्तीवचनात्त्वरया नन्दिकेश्वरः ।। १५ ।।

गणानाहूय तत्रस्थानपश्यद्देवतागणम् ।
स्तुवन्तं देवमीशानं तेजः पुञ्जेक्षणं तदा ।। १६ ।।

मेरुमौलिगतं तत्र विष्णुब्रह्मादिमं द्विज ।
भीत्या सम्भ्रान्तमत्यन्तं दृष्ट्वा तेजो दुरासदम् ।। १७ ।।

---

1. शिवान्तिक गतामित्यर्थे । शिवान्तिके इति प्रयोगोऽपि । समञ्जसो भाति । नन्दिकेश्वरः गणानपश्यत् ।

पुनः समागतास्तत्र गणपा नन्दिनोज्झिताः ।
प्रणम्य विनयोपेता नन्दिकेशाग्रतो गणाः ।। १८ ।।

**गणा ऊचुः**

सुधाम्बुधेर्मध्यगतं तेजो दृष्ट्वा दुरासदम् ।
भीता देवगणाः सर्वे स्तुवन्ति परमेश्वरम् ।। १९ ।।

मेरुमौलौ सदा देवा बृहस्पतिपुरोगमाः ।
अन्ये न सन्ति तत्रैव पूर्वतस्त्वयि शासति ।। २० ।।

शिलादह्रदयान्द गणेश्वरवरोत्तम ।
रथोऽपि सज्जो देवस्य तच्छीघ्रं विनिवेद्यताम् ।। २१ ।।

नन्दिकेशस्तदा प्राह जयन्तीं प्राञ्जलिस्तदा ।

**नन्दिकेश्वरः**

श्रुतं गणवरैरुक्तं यत्त्वयोक्तं तथैव हि ।। २२ ।।

रथोऽपि सज्जो देवस्य गन्तुं तत्र रुचिर्यदि ।
देवदेवस्य देव्याश्च निवेद्यानन्तरं कुरु ।। २३ ।।

इत्युक्ता सा तदा तस्थौ नन्दिकेशानुमोदिता ।
ययौ द्रुतं सा सविधं शिवस्याम्बायुतस्य च ।. २४ ।।

प्रणम्य सा शिवौ तत्र सिह्मासनवराश्रितौ ।
प्राञ्जलिः सा तदा प्राह जयन्ती परमेश्वरौ ।। २५ ।।

**जयन्तीः (उवाच)**

देव देव जगन्नाथ नन्दिकेशान्मया श्रुतम् ।
देवानां भयमुत्पन्नं तेजः पुञ्जोद्गमेन च ।। २६ ।।

---

नन्दिनोज्झिता गणपा देवतागणं दृष्ट्वा समागताः ।।

स्तुवन्ति वेदघोषेण मेरुमूर्ध्नि स्थिताः सुराः ।
त्वां स्तव्यं स्तोत्रवर्यैश्च वेदसंस्तुतमीश्वरम् ।। २७ ।।

रथोऽपि सज्जो भगवंस्तव गन्तुं मनो यदि ।
तच्छ्रूयतां महादेव रथकल्पनमुत्तमम् ।। २८ ।।

विहितः(तं) स्यन्दनं सज्जः(ज्जं) अथवा ।
विहितः स्यन्दनः सज्जस्तवास्तु विजयोदयः ।। २९ ।।

अष्टौ कण्ठीरवा यत्र यत्रोक्ष्णामष्टकं शुभम् ।
यत्रेभाः परिभान्त्यष्टौ यत्राष्टौ जविनो हयाः ।। ३० ।।

मनःसम्यमनं यत्र कशापाणिर्व्यवस्थितः ।
गङ्गायमुनयोश्चैषां चक्रे पवनदेवताः ।। ३१ ।।

सायंप्रातर्मयं चक्रे छत्रं ते हेममण्डलम् ।
तारावलिमया कीर्तिरह्नो या उपनायकाः ।। ३२ ।।

श्रुतयो मार्गदर्शिन्यः स्मृतयो रथगुप्तयः ।
दक्षिणार्धदृढा यत्र सखायोऽत्रापि लक्षकाः ।। ३३ ।।

आसनं प्रणवो यत्र गायत्री चापि पीठभूः ।
साङ्गा व्याहृतयो यत्र शुभाः सोपनावीथिकाः ।। ३४ ।।

सूर्याचन्द्रमसौ यत्र सततं द्वाररक्षकौ ।
स्वासितं कण्ठमूहुश्च रथाश्च रथगुप्तयः ।। ३५ ।।

ध्वजदण्डो महामेरुः पताका भास्करप्रभाः ।
स्वयं वाग्देवता यत्र चलच्चामरधारिणी ।। ३६ ।।

लक्ष्मीश्च छत्रं सुश्वेतं हिमधामसमप्रभम् ।
आहूता इव चाजग्मुर्विश्वे भुवनवासिनः ।। ३७ ।।

देवकोट्यस्त्रयस्त्रिंशद्गणकोट्ययुतद्वयम् ।
नव कोट्यस्तु चामुण्डा भैरवाः कोटिसम्मिताः ।। ३८ ।।

रुद्रा एकादश विभो कोटयः समुपागताः ।
कपर्दचन्द्रार्धवराः शूलहस्ता वरायुधाः ।। ३९ ।।

षडाननकुमाराश्च मयूरवरवाहनाः ।
वीरबाहुप्रभृतयो नवलक्षं सनातनाः ।। ४० ।।

शक्तिहस्ता महाभागाः बलिनोह्युद्यतायुधाः ।
रुद्राण्यो नव कोट्योऽथ असिहस्ता महाबलाः ।। ४१ ।।

योगिन्यः सप्तकोट्यस्ता आययुः परशूकराः ।
पिचण्डिला महातुण्डा विघ्ननिघ्ना गजाननाः ।। ४२ ।।

द्विकोटयो महाभागाः पाशाङ्कुशसुपाणयः ।
नन्दिकेशानुगास्ते वै कोटयो गणपुङ्गवाः ।। ४३ ।।

भस्मगात्रास्त्रिपुण्ड्राङ्काः शरकार्मुकपाणयः ।
चण्डीश्वरगणाः कोटिखड्गहस्ता दुरासदाः ।। ४४ ।।

वीरभद्रगणाः कोटिखड्गहस्ता दुरासदाः ।
तथा श्रृङ्गिगणाः कोटिखड्गहस्ता दुरासदाः ।। ४५ ।।

यक्षेशानुचराः कोटिदण्डहस्ता महाबलाः ।
षडशीतिसहस्राणि मुनयो ब्रह्मवादिनः ।। ४६ ।।

तावन्तोऽत्र समाजग्मुस्तावन्तो गृहमेधिनः ।
नागानां कोटयस्तिस्रः पातालतलवासिनाम् ।। ४७ ।।

दानवानां च दैत्यानां द्वे द्वे कोटी शिवाधुना ।
गन्धर्वा नियुतान्यष्टौ कोट्यर्धं यक्षरक्षसाम् ।। ४८ ।।

विद्याधराणामयुतं नियुतं चाप्सरोद्वयम् ।
गोमातरस्तथैवाष्टौ सहस्राणि सुपर्वणाम् ।। ४९ ।।

दशसाहस्रमुत्कृष्टं पक्षिणां बलशालिनाम् ।
किन्नराणां तथा षष्टिसहस्रं वाद्यशालिनाम् ।। ५० ।।

शङ्खभेरीमृदङ्गानां दुन्दुभीडमरूयुताम् ।
गन्धर्वकोटयोऽत्रैव वीणासक्तकरास्तथा ।। ५१ ।।

सागराः सप्त सम्प्राप्ता नानारत्नोपदाप्रदाः ।
सरितां च सहस्राणि त्रीणि पञ्चायुतानि च ।। ५२ ।।

गिरयोऽष्टौ सहस्राणि कोटयोऽत्रवनस्पतीः (?) ।
आजग्मुर्दिग्गजा अष्टौ वेदाः साङ्गाः समागताः ।। ५३

ब्रह्मविष्ण्वादयो देवा रुद्रो वासव एव च ।
तथैव द्वादशादित्या वसवोऽथाश्विसम्युताः ।।
तवागमनमिच्छन्तः प्रार्थयन्ति महेश्वरम् ।। ५४ ।।

आरुह्य तद्रथवरं शिवया समेति
देवी मुदा गणगणैः सुरसिद्धसङ्घैः ।
देव्या सखीसुवचनेन ययौ सुधाब्धौ
द्वीपं मणीन्द्रकलितं शशिधाममौलिः ।

।। इति श्रीशिवरहस्ये द्वितीयांशे ईश्वरमेरुगमनं नाम नवमोऽध्यायः

## ।। दशमोऽध्यायः ।।

**जैगीषव्य उवाच**

इभवक्त्रानुज श्रीमन् क्रौञ्चपर्वतसूदन ।
कथं जगाम भगवान् कैलासाच्छङ्करालयात् ।। १ ।।

देव्याः प्रियचिकीर्षुः सन् सृष्टद्वीपविलोकने ।
वद तन्महिमोदारं दिव्याख्यानवरं शुभम् ।। २ ।।

वैकुण्ठे देवदेवस्य चरित्रं परमाद्भुतम् ।
न हि तृप्यामि भगवन् सर्वं विस्तरतो वद ।। ३ ।।

तस्योदारवचः श्रुत्वा शाम्भवस्य महात्मनः ।
अत्यन्तहृष्टवदनस्तारकारिरभाषत ।। ४४ ।।

**स्कन्दः (उवाच)**

शृणु विप्रोत्तम श्रीमत्कैलासात्सुन्दरालयात् ।
जयन्तीवाक्यतुष्टात्मा शिपिविष्टो महेश्वरः ।। ५ ।।

देव्या दत्तकरश्चापि रत्नपादुकपादभूः ।
कैलासवरसौधाच्च निर्गत्य गिरिजायुतः ।। ६ ।।

अद्रीन्द्रसुतया सार्धं देवश्चोक्षेन्द्रमारुहत् ।
ककुदाभोगविस्तीर्णरत्नकल्पविभूषितम् ।। ७ ।।

महाधर्ममहापादं रत्नघण्टाविभूषितम् ।
शृङ्गकोटितटीभास्वद्रत्नसन्मकुटीयुतम् ।। ८ ।।

तत्रालम्बिशरत्काल चामरद्वय शोभितम् ।
सोमनन्दिमहानन्दि बाणरावणभृङ्गिभिः ।। ९ ।।

देव्या सर्वगणैः सार्धं रुद्राणीकरचामरैः ।
रत्नव्यजनकैश्चैव गणैर्विधृतछत्रकैः ।। १० ।।

उद्यच्छशाङ्कसदृशपर्वोत्थपरिमण्डलैः ।
स्थूलमुक्तासरालम्बिगणेन्द्रधृतचामरैः ।। ११ ।।

पद्मकान्तिविनिस्फूर्जद्वातपोताहताग्रकैः ।
तुहुण्डहुण्डचण्डीश नटभृङ्गिरिटेः पुरः ।। १२ ।।

वीरभद्रमहाभद्रकालाग्निवररुद्रकैः ।
शरकार्मुक निस्त्रिंशनिषङ्गोद्यत्करैः शुभैः ।। १३ ।।

स्वमुखे विधृतापारस्वच्छादर्शगुणोज्ज्वलैः ।
कुमारगणपाद्यैश्च प्रणतोत्थापितैस्तथा ।। १४ ।।

नन्दिकेशगणापारस्वर्णवेत्रप्रचालितैः ।
रुद्रैश्च योगिनीमुख्यैर्भैरवैर्डाकिनीगणैः ।। १५ ।।

यक्षेन्द्रैर्विविधाकारैर्नानाशस्त्रौघमण्डलैः ।
दण्डिमुण्डिधृतापारस्वर्णमद्दलकाहलैः ।। १६ ।।

सुशङ्खवरघोषैश्च निस्वनैः पटहोत्थितैः ।
गणहस्ताहतापार दुन्दुभीमेघघोषणैः ।। १७ ।।

कैलासशिखरोत्तुङ्गमौलिबर्हिकृतारवैः ।
अनेकडिण्डिमापारमड्डुगोमुखजै रवैः ।। १८ ।।

काहलाग्रालम्बिताच्छचामराणां च कोटिभिः ।
गणेन्द्रजयघोषैश्च विनादित दिशागुहम् ।। १९ ।।

कृष्णागरुमहासारधूपपात्रकरैर्गणैः ।
फलजालकरैरन्यैः स्वर्णपात्रकरैर्गणैः ।। २० ।।

भूषणाभोगविधृतवरपात्रकरैर्गणैः ।
कर्पूरखण्डजोद्दामदीपपात्रकरैर्गणैः ।। २१ ।।

फलताम्बूलहस्तैश्च प्रणामाञ्जलिसत्करैः ।
भस्मधारकरैरन्यै रुद्राक्षवरहस्तकैः ।। २२ ।।

देवी सखीगणापारकृतनीराजनोत्सवा ।
जयन्त्याच्छधृतच्छत्रमोहनाननसुन्दरा ।। २३ ।।

विजयाकरसद्वीटीविधृतांशुनखोज्जवला ।
ललन्त्यावारितमरुच्चामरैरतिसुन्दरा ।। २४ ।।

व्यजनैककरालम्बिभूषणोत्तमभूषया ।
पद्मया शोभिता पार्श्वे वाण्या धृतपताकया ।। २५ ।।

शच्या भृङ्गारुकरया शुशुभे सा महेश्वरी ।
देवाङ्गनाप्सरोजालरुद्राणीकोटिभिर्वृता ।। २६ ।।

कलकज्जलभूषादि पुण्यस्रग्गन्धधारिभिः ।
रत्नपादुकहस्ताश्च शरशूलवरायुधाः ।। २७ ।।

नवयौवनदीप्ताङ्ग्यः कुम्भोद्यत्सुपयोधराः ।
वस्त्रपेटिधराश्चान्या तथा ताम्बूलवाहिनी ।। २८ ।।

क्वणत्पादगमञ्जीरकङ्कणावलनोज्ज्वलाः ।
रक्तपीतारुणलसत्कौसुम्भवसनोज्ज्वलाः ।। २९ ।।

दिव्याङ्गरागपुण्योद्यत्कबराः कमलाननाः ।
सेवन्ति परितो देवीं नानासेवाविशारदाः ।। ३० ।।

गणेशप्रमथाधीशा यक्षेन्द्राः फणिभूषणाः ।
रुद्राश्चापि महोदारकाकोदरधरास्तदा ।। ३१ ।।

विबुद्धचन्द्रार्धधराः कपर्दवरशेखराः ।
भस्मभास्वन्महाकायास्ते सर्वे ह्यहिमन्यवः ।। ३२ ।।

शिवापाङ्गपरिस्पन्दसमकालजगद्बलिम् ।
गृह्णन्तो गणवीरास्ते महापरशुपाणयः ।। ३३ ।।

शरकर्मुकनिस्त्रिंशकुठारशरपाणयः ।
खड्गहेतिकुठारोद्यत्कराः कवचिनस्तथा ।। ३४ ।।

महाबलमहोत्साहा नानावर्णा बलोत्कटाः ।
केचिद्धरिहयापारमातङ्गवदना गणाः ।। ३५ ।।

मयूरशुकभेरुण्ड पालीशरभवक्त्रकाः ।
मार्जारकुक्कुटोलूकतरक्षुवृकसूकराः ।। ३६ ।।

वानरोपमवक्त्राश्च कृशाः स्थूलाः पिचण्डिलाः ।
भेकवायसगोवक्त्र महिषाजमुखास्तथा ।। ३७ ।।

मूषिकास्यास्तथा केचिन्निर्मांस स्नायुबन्धनाः ।
पारावतास्याश्च तथा महास्थूलाः पिचण्डिलाः ।। ३८ ।।

रक्ता वलक्षाः कर्बूराः पीताश्च हरिता गणाः ।
कोकिलास्याः शुकमुखाः करालविकटाननाः ।। ३९ ।।

दंष्ट्राविवृत्तदशना लेलिहानास्तदोष्ठके ।
सृक्विणी[1] कृकणीनिर्यन्महाजिह्वोरुनासिकाः ।। ४० ।।

गणानां कोटयस्तत्र देवस्य पुरतो ययुः ।
रुद्राणीकर पुष्पैश्च लाजवर्षैर्महेश्वरः ।। ४१ ।।

कैलासमौलिप्रासादमध्यस्थास्तटितो यथा ।
विकिरन्ति तदा देव्या मुक्तपुष्पैर्महेश्वरम् ।। ४२ ।।

केचित्सुगन्ध(न्धि) कर्पूरैः पाटीरसलिलैः शिवम् ।
वर्षन्ति शैलमौलिस्था धारापात्रैः सदाशिवौ ।। ४३ ।।

वर्षासु मेघगणवद्रुद्राण्यो नवयौवनाः ।
पश्यन्त्स्वकैलासमहालिङ्गसौधोरुश्रृङ्गकम् ।। ४४ ।।

लिङ्गालयगणं हीरवरकुम्भैकभासुरम् ।
वृषेन्द्रं च समारुह्य सिह्मासनवरास्थितौ ।। ४५ ।।

रेजतुः प्रमथोदारैर्देवदारैः सहैव च ।
उदारैर्गणवृन्दैश्च रुद्राणीगणकोटिभिः ।। ४६ ।।

आरुह्य शाक्करं[2] दिव्यं रत्नघण्टाच्छसञ्झलम् ।
वामभागस्थया देव्या वृषाधि[3] अभिकल्पिते ।। ४७ ।।

---

1. सृक्कणी - सृक्विणी - The corner of thd mouth. कृक - the throat, कृकार्थे - कृकणीति प्रयोगः भवेदिति मन्यामहे । कृकण - A worm.

2. शाङ्करः शक्करः an ox. 3. वृषाधि वृषोपरि = वृषोपरि ।

सिह्मासनवरे देवः प्रभामण्डलशोभिते ।
छत्रापारच्छन्नमुखश्चामराकलितालकः ।। ४८ ।।

पताकासङ्घनिबिडवाद्यघोषैकभासुरः ।
मकुटेनावृतमुखः शरच्चन्द्रांशुलाञ्छनः ।। ४९ ।।

दिव्याङ्गरागसुभगगन्धामोदितदिक्तटः ।
त्रिणेत्रविलसत्फालस्त्रिपुण्ड्रावलिभासुरः ।। ५० ।।

तथालिनीलसुगलालम्बिरत्नोरुहारकः ।
कुण्डलीशफणारत्नरिङ्खत्सान्द्रोज्ज्वलन्मुखः ।। ५१ ।।

मृगटङ्कवराभीतिवृत्तबाहुचतुष्टयः ।
रत्नमुक्ताफलापारमालाजालैक सुन्दरः ।। ५२ ।।

दिव्याम्बरधरो भाभिः कटीतटविराजितः ।
रत्नमञ्जीरनिनदकाञ्चीकाञ्चितमध्यमः ।। ५३ ।।

सुरासुरेन्द्रमकुटरत्ननीराजिताङ्घ्रिकः ।
उद्यच्छशाङ्कधवलसुन्दरामलविग्रहः ।। ५४ ।।

वामभागस्थया देव्या हरिन्मणिनिभाच्छया ।
विद्रुमाभरणछायासरसाधरबिम्बया ।। ५५ ।।

कचवेणीधृतापाररत्नचूडामणिव्रजैः ।
तिलकोज्ज्वलसद्वृत्त सोममण्डलवक्त्रया ।। ५६ ।।

किरीटरत्नगणजधारासारेन्दुभूषया ।
सुमनामोदसुभगधम्मिल्लालकया तदा ।। ५७ ।।

दिव्यकण्ठसरापारललत्पदकया तदा ।
रत्नग्रैवेयचिन्ताकललद्धारलताशतैः[1] ।। ५८ ।।

दिव्यशुक्रोदयाकारमुक्तानासोरुधारया ।
रत्नताटङ्कविलसत्कपोलतटभासया ।। ५९ ।।

दिव्यबाहुलतालोलभूषितानेकभूषया ।
निचोलकीलितापार वरमुक्ता सरश्रिया ।। ६० ।।

हस्तभ्राजन्नागबन्धरत्नवङ्कीकया तदा ।
मणिबन्धघनभ्राजिरत्नकल्पैकभूषया ।। ६१ ।।

पदमञ्जीरशिञ्जानरणदालक्तपादया ।। ६२ ।।

सुरेन्द्रमुकुटीकोटिनमत्किणपदाब्जया ।
नखामलसुरत्नाच्छवृत्तचन्द्रजितश्रिया ।। ६३ ।।

देव्या युतो हि भगवानम्बिकापतिरीश्वरः ।
कैलासशिखराद्देवो ययौ वृषभकेतनः ।। ६४ ।।

देव्या प्रसीदेति तदा प्राञ्जल्या प्रार्थितो हरः ।
क्षणं तत्र स्थितो मेरोर्मूर्ध्नि देवो(व) उमाधवम् ।। ६५ ।।

दृष्ट्वा तादृक्षमीशानं महोक्षवरवाहनम् ।
त्र्यक्षं दक्षसुतायुक्तं मेरुमूर्ध्नि सुरासुराः ।। ६६ ।।

मुनयो देवसङ्घाश्च दिक्पालाः समरुद्गणाः ।
ऋतवः पितरश्चैव मातरश्च ग्रहाश्च भाः ।। ६७ ।।

---

1. लसद्धारोरुशोभया ।

दण्डप्रणामाञ्जलिभिर्मुकुटी कोटिशोभितैः ।
जयेति च प्रसीदेति शिवे पाहिति ते सुराः ।। ६८ ।।

प्रणम्य बद्धाञ्जलयः क्षणं तत्र स्थितेश्वरे ।
नन्दी विज्ञापयामास प्राञ्जलिर्विनयान्वितः ।। ६९ ।।

एष विष्णुरयं ब्रह्मा रुद्रोऽयं च शतक्रतुः ।
सूर्यचन्द्राविमौ देव मरुतो वसवोऽश्विनौ ।। ७० ।।

आदित्याश्चैव दिक्पाला सर्षिसङ्घाः सुरासुराः ।
वेदाश्चेमेऽपि चत्वारः साङ्गोपनिषदोऽखिलाः ।। ७१ ।।

गिरीन्द्राश्च ततो नद्यः प्रजानां पतयस्तथा ।
मनवो ग्रहमुख्याश्च ताराजालं च कृत्स्नशः ।। ७२ ।।

प्रणाममुखरान्देव कृपादृष्ट्या विलोकय ।
त्वदालोकनमात्रेण सफलानफलान्कुरु ।। ७३ ।।

इत्थं नन्दीश्वरवचो निशम्य करुणारसैः ।
आलोकयदथेशानो देवान् सप्रणयान् स्थितान् ।। ७४

जयया प्रार्थिता देवी देवानालोकयेति च ।। ७५ ।।

शिवौ तदालेक्य सुरासुरव्रजं
दृष्ट्वा प्रसादमुखरायितकोटिदृष्ट्या ।
वेदैस्तथोपनिषदां स्तुतदेवसङ्घैः
संवर्षितौ सुमनसां त्रिजगज्जनित्रौ ।। ७६ ।।

।। इति श्री शिवरहस्ये द्वितीयांशे शिवागमनं नाम दशमोऽध्यायः ।।

## ।। एकादशोऽध्यायः ।।

**सूत उवाच**

प्रणम्य श्रीमहादेवं कृताञ्जलिपुटाः सुराः ।
तुष्टुवुः प्रमथाधीशं अम्बाधीशं जगद्गुरुम् ।। १ ।।

वचनैः सुप्रसन्नेन मनसा साम्बमीश्वरम् ।। २ ।।

**देवाः (ऊचुः)**

हर हर पुरहर वितर विमुक्तिं
कुरु कुरु करुणां सुरजाले ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। ३ ।।

मुरहर नयनार्चितपद शङ्कर
विधिहर यमहर शम्भो ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। ४ ।।

परिहर घोरभवाम्बुधिदुःखं
जनिनाशोद्यतमीश ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। ५ ।।

तरुणेन्दुद्युति शोभितगङ्गा-
मुकुटी जट तट शम्भो ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। ६ ।।

करिवर हरिवर चर्मवसान
सुस्वर पोषक देव ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। ७ ।।

निगमायिततुरगोत्तम शङ्कर
हरिशर पुरहर शम्भो ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। ८ ।।

अतिदर्पोद्धतयममदखण्डन
पालितद्विजनृपपोत ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। ९ ।।

गजहर स्मरहर भवहर भगवन्
भवतरणे करुणाब्धे ।
शरणं भव भव शरणं भव भव
कुरु कुरु करुणां शशिमौले ।। १० ।।

देवानां च स्तुतिं श्रुत्वा भगवानिन्दुभूषणः ।
उद्यत्सुधाकरज्योत्स्नाप्रकाशमुखसुन्दरः ।। ११ ।।

प्राह तान् प्रमथाधीशो विष्णुब्रह्मेन्द्रपूर्वकान् ।
प्रणतान्दण्डवद्भूमौ देवदेवः कृपानिधिः ।। १२ ।।

प्रसार्य दक्षिणं हस्तं मा भैष्टेति वदन् शिवः ।
उत्तिष्ठतेति तानाह विनयानतकन्धरान् ।। १३ ।।

**ईश्वरः (उवाच)**

तुष्टोऽहं भवतां स्तुत्या सुरेशा विष्णुपूर्वकाः ।
भवतां भवजालानि नाशयामि क्षणात्सुराः ।। १४ ।।

मनागपि न चिन्ता वः कार्या क्वापि कदाचन ।
यूयं मदर्चका नित्यमनन्यशरणाः सुराः ।। १५ ।।

भवत्स्तवहृतात्माहं भवत्सु परितोषकृत् ।
यात स्थानानि सदये मयि तिष्ठति शङ्करे ।। १६ ।।

विष्णो पालय देवांस्त्वं दैत्येभ्यः सर्वदा हरे ।
मद्दत्तचक्रधाराभिः सदैवाजौ हि (नि) पात्य तान् ।। १७ ।।

संहरान्ते जगज्जालं रुद्र शूलाग्रधारया ।
अन्योन्यसक्तमोहाः स्थ यूयं मद्वचनात्सुराः ।। १८ ।।

परस्परानुरक्ताश्च परस्परहिते रताः ।
त्रिविष्टपे वस त्वं हि वासवाद्य सदा मुदा ।। १९ ।।

देवैर्मरुद्भिरक्रतुभिरश्विभ्यामादितेयकैः ।
स्वर्गिणां शाश्वतं भोगं ददस्व[1] त्वं मदाज्ञया ।। २० ।।

---

1. ददस्व = देहि

वह्ने वह त्वं देवानां हव्यं कव्यं पितृष्वपि ।
मखेषु सोमं देवानामाहुतं विप्रसत्तमैः ।। २१ ।।

तपन स्वकरोत्सारैः कुर्वन्नस्तमयोदयम् ।
विप्राणां कालकलने व्रज मातन्द्रितो भव ।। २२ ।।

सोम त्वं तु निशीथेषु स्वांशुभिः पोषयञ्जगत् ।
ओषधीषु रसं बिभ्रद्वस मा सम्भ्रमो भव ।। २३ ।।

वरुण त्वं सदा पाशैः पाशयन् पापिजालकम् ।
दैत्येन्द्रैः संवस त्वं वै अर्णवान्तर्जलेशयः ।। २४ ।।

यम त्वं नारकान्त्सर्वान् दुःखभोगेषु पातय ।
असिपत्रे कुम्भिपाके महारौरवकादिषु ।। २५ ।।

सन्तप्ताश्चाद्य कालेषु तप्तभूमिविकुण्ठनैः ।
भस्मरुद्राक्षहीनाङ्गाँल्लिङ्गार्चनविवर्जितान् ।। २६ ।।

रुद्रपञ्चाक्षरावृत्त्या वर्जितांस्तर्जितान्कुरु ।
मां च विष्ण्वादिभिः साकं पूजनं मोहतो यम ।। २७ ।।

ऊर्ध्वपुण्ड्राङ्कनधरं तप्तचक्रादिचिह्नितम् ।
सन्तापयाशु शनकैः पादैस्तप्तायसोद्भवैः ।। २८ ।।

अशैवेष्वन्य पापेषु मा दयां कुरु सर्वथा ।
अशैवभवनं प्रोक्तं नरकालयमुत्कटम् ।। २९ ।।

अशैवयातनार्थाय सृष्टस्त्वं सूर्यनन्दन ।
मा विलोकय ताञ्छैवान् भस्मरुद्राक्षचिह्नितान् ।। ३० ।।

त्रिपुण्ड्रफालानमलान् रुद्राक्षवरकङ्कणान् ।
रुद्रसूक्तजपासक्तान् रुद्रलिङ्गार्चने रतान् ।। ३१ ।।

बिल्वपत्रैः प्रदोषेषु सोमवारे त्रिसन्ध्यकम् ।
अनन्यभावात्सततं पञ्चाक्षरजपादरान् ।। ३२ ।।

शिवक्षेत्रैकवसतीन् अन्यक्षेत्रपराङ्मुखान् ।
अविमुक्ते पुण्डरीके रुद्रकोटौ महालये ।। ३३ ।।

प्रभासे पुष्करे चैव रुद्रकोटौ प्रयागके ।
वृद्धाचलेऽरुणाद्रौ च ओङ्कारे भृगुतुङ्गके ।। ३४ ।।

त्र्यम्बके गण्डकायां च पुण्यसोमेश्वरे तथा ।
श्रीशैले च कुरुक्षेत्रे पिण्डारककुरण्टके ।। ३५ ।।

नर्मदायां शर्मदायां तथैवामरकण्टके ।
गोकर्णे नैमिशारण्ये बदर्यां कुब्जशैलके ।। ३६ ।।

श्रीमद्दक्षिणकैलासे काञ्च्यां मध्यार्जुने तथा ।
कुम्भघोणेऽथ मायूरे श्वेतारण्ये द्रुतिस्थले ।। ३७ ।।

जप्येशे जम्बुविपिने तृणावर्ते श्रुतीश्वरे ।
श्रीकण्ठे सह्यमौलौ च हालास्ये गन्धमादने ।। ३८ ।।

दक्षिणाम्भोनिधेः कोटौ यम त्वं श्रुतिकानने ।
कमलावसतौ चापि सह्यजापुण्यरोधसि ।। ३९ ।।

ये शिवक्षेत्रनिरता मद्भक्ताः संयता मम ।
अपि पापान्वितिाश्चापि तान्विवर्जय वर्जय ।। ४० ।।

अन्त्यजा वा तथा शूद्राः सङ्करा वा द्विजा अपि ।
शैवा येऽद्यापि ते सर्वे त्वया पूज्याः सदा यम ।। ४१ ।।

गोघ्नान् कृतघ्नान् गरदान् पिशुनान् पारदारिकान् ।
विश्वासघातकान्दुष्टान् द्विजनिन्दापरायणान् ।। ४२ ।।

पञ्चपापोपपापौघैर्युतं नित्यं प्रशासय ।
इत्युक्त्वा गिरिजाजानिः कुबेरं प्राह शङ्करः ।। ४३ ।।

कुबेर त्वं निधीशान मदाज्ञामनुपालय ।
ईशान रुद्रबृन्दैस्त्वं दिव्यन्तरजभूचरैः ।। ४४ ।।

वसुरुद्रगणैः सार्धं निहतारिः सदैव हि ।
मत्सारूप्यमनुप्राप्तो मत्पादाम्बुजभक्तितः ।। ४५ ।।

ये शैवनियताः सर्वे त्वत्कैलासवरे स्थिताः ।
त्वया सहैव कल्पान्ते मामेष्यन्त्यपुनर्भवाः ।। ४६ ।।

निर्ऋते नैर्ऋतगणैर्वस नित्यमनुद्धतः ।
वायो त्वं सर्वगः साधुर्वस नित्यं स्वलोकगः ।। ४७ ।।

ग्रहाः काव्योऽङ्गिरा भूजः सौरिः केतुर्विधुन्तुदः ।
मदाज्ञयैव सततं दर्शयन्तश्चरैः स्वकैः ।। ४८ ।।

शुभाशुभानि सर्वेषां मदाज्ञावशतः सदा ।
ऋक्षैः संवत्सरगणैर्ध्रुवाधारा कृता मया ।। ४९ ।।

वसिष्ठो गौतमोऽत्रिश्च जमदग्निश्च काश्यपः ।
विश्वामित्रो भरद्वाज एते सप्तर्षयो मम ।। ५० ।।

शासनाद्देवराजस्य भ्रमन्तो मेरुमौलिगाः ।
हिताहितं च जगतां कुर्वन्तोऽथ वसन्ति च ।।

वसवो यूयमायात प्रतिकल्पेषु सर्वशः ।
मदाज्ञया लोकसृष्टिं सृजध्वं नृपसत्तमान् ।। ५२ ।।

शेषाशेषफणाजालैर्भुवो जालं वहन्वस ।
दिग्गजाः सरितः शैला सागराश्चाप्सरोवराः ।। ५३ ।।

गन्धर्वाः किन्नरा यक्षाः सुपर्णाः सिद्धचारणाः ।
स्वस्वकालोचितां वृत्तिं वहन्तु मदनुग्रहात् ।। ५४ ।।

भूधराः सिन्धुराश्चाष्टौ नद्यः स्पन्दत शीघ्रगाः ।
सागराश्चाप्यनुद्वेला अगा यूयं गिरीश्वराः ।। ५५ ।।

इत्यनुग्राह्य तान्देवान् स जगाम वृषध्वजः ।। ५६ ।।

ब्रह्मा विष्णुरथो महेश्वरपदं नत्वाभियाताः सुखं.
देवाः सर्षिगणा गिरीन्द्रजगणा हृष्टाष्टमूर्तेः पदम् ।
लोकान्त्स्वानगजापतिप्रकथिताः पारार्थसारादराः
कुर्वन्तः स्थितिमुत्तमां च जगतो लोकेषु देवैः सुराः ।।

।। इति श्री शिवरहस्ये द्वितीयांशे देवानुग्रहोनामैकादशोऽध्यायः ।।



## ।। द्वादशोऽध्यायः ।।

**स्कन्द उवाच**

गतेषु देवसङ्घेषु भगवान्भगनेत्रहा ।
देवो देवीसखीभिश्च गणेन्द्रैश्चाप्यनुव्रतः ।। १ ।।

तत्तत्स्थानेषु चाप्यन्यान् गणान् रौद्रान्महेश्वरः ।
योगिनीर्भैरवांश्चापि डाकिनीश्चापि शाकिनीः ।। २२ ।।

अनुज्ञाप्य प्रयाते च तत्स्थानेऽस्मिन्त्सदाशिवौ ।
प्रहृष्टौ तौ महादेवौ महोक्षेन्द्रेण गामिनौ ।। ३ ।।

उल्लोलतरकल्लोलसुधासागरतीरकम् ।
प्राप्यतो गणमुख्यैश्च उक्षेंद्रेणानिराजता ।। ४ ।।
[प्राप्यैतौ गणमुख्यैश्चाप्युक्षेन्द्रेणातिराजता]

रजताद्रिनिभेनाच्छछायाधवलितेन च ।
मणिद्वीपं शिवौ यातौ कान्तिविद्योतदिङ्मुखम् ।। ५ ।।

सुधाम्बुधेर्जलं तस्य जानुदघ्नं वृषस्य हि ।
गणेन्द्रैर्नन्दिमुख्यैश्च मया च गणपेन च ।। ६ ।।

जानुदघ्नोऽभवच्चाब्धिः शङ्करस्य प्रसादतः ।
देव्याः सखीगणानां च त्रिणेत्रदयया द्विजाः ।। ७ ।।

तद्द्वीपमैक्षत्[1] त्र्यक्षोऽपि देवी सापि महेश्वरी ।
गणाश्चाहं तथेशश्च देव्याश्चापि सखीगणः ।। ८ ।।

---

1. ऐक्षत् = ऐक्षत

द्वीपमध्यं तदा प्राप्य सर्वेषां विस्मयावहम् ।
विस्मयन्तीं तदा देवीं प्राह देवो वृषध्वजः ।।

वृषारूढः शिवापार्श्वे सञ्चरन् वृषभस्थितः ।
पश्य द्वीपमिदं भद्रे भद्रदं दर्शनेन च ।। १० ।।

सुधासागरमध्यस्थं तत्कल्लोलातिभावितम् ।
घर्घरैर्मारुतारावै रम्योत्तुङ्गशिलातलैः ।। ११ ।।

मणिजालैकपुलिनं मणिकान्तिशताधिकम् ।
बालभानुसहस्राभं चन्द्रकोटिप्रभाततम् ।। १२ ।।

उत्फुल्लपङ्कजाकारं पद्मरागसरागकम् ।
द्वीपकान्त्या च लोकाश्च सर्वे कान्ततराः शिवे ।। १३ ।।

न सूर्यचन्द्रौ नो विद्युत् नाग्निर्नो तारकागणाः ।
एतस्य भासा कोट्यंश कोट्यंशेनापि नो समाः ।। १४ ।।

क्वचिद्विद्रुमसङ्घाभबिम्बकान्तिशताधिकम् ।
क्वचिन्मरकतछायं विद्युद्भानुसमच्छवि ।। १५ ।।

मध्याह्नभानुकिरणसदृशं क्वचिदेव हि ।
सन्ध्यानिबिडरक्ताच्छरागविद्योतितं क्वचित् ।। १६ ।।

इन्द्रनीलमणिश्याममेघगर्भसमं क्वचित् ।
क्वचित् सिन्दूरमाणिक्यजपादाडिमवर्णकम् ।। १७ ।।

निष्टप्तहेमभासं च पश्य तत्क्वचिदद्रिजे ।
विद्युत्कोटिमहाधारासारकान्तिततं क्वचित् ।। १८ ।।

प्रोज्वलद्बडवावह्निज्वालाजालप्रभासुरम् ।
पुष्परागमणिप्रोद्यत्त्विषां पारं क्वचिच्छिवे ।। १९ ।।

हीरसारमहागर्भं धगद्धगित दिक्तटम् ।
गोमेद मेदगर्भाच्छं क्वचिद्वैडूर्य सप्रभम् ।। २० ।।

वैडूर्यकान्तिसूत्रोत्थधारासारैकभासुरम् ।
रम्यमुक्तासुवृत्तोरुस्वच्छकान्त्यधिकं क्वचित् ।। २१ ।।

कुरुविन्दमणिच्छायाप्रभाततियुतं क्वचित् ।
चन्द्रोज्ज्वलाच्छस्फटिकतलोद्यद्धवलं क्वचित् ।। २२ ।।

मिश्ररागयुतं चापि कपोतकुलसप्रभम् ।
मयूरकण्ठवर्णाच्छतलविद्योतितं क्वचित् ।। २३ ।।

पञ्चाशल्लक्षमायामं द्वीपरत्नमिदं शिवे ।
पूर्वं क्रीडाविनोदाय कल्पितो मनसा मया ।। २४ ।।

सुधासागरजोत्तुङ्गतरङ्गस्पृष्टपीठभूः ।
नात्र देवा न गन्धर्वा न पिशाचा मरुद्गणाः ।। २५ ।।

गणेन्द्राः प्रमथेन्द्रा वा नाप्तुवन्त्यद्भुतं शिवे ।
पश्य रत्नगिरींश्चापि नानारत्नैकभासुरान् ।। २६ ।।

नानारत्नगणात्यच्छ वृक्षच्छाया सुमौलिकः ।
चन्दनैस्तिलकैः सालैरशोकैः पारिजातकैः ।। २७ ।।

तगरैरगरैश्चैव कोविदारैः सुरादनैः ।
देवदारुसुगन्धोद्यच्चन्दनानन्दिश्रृङ्गकम् ।। २८ ।।

सालतालतमालैश्च कृतमालैश्च पिप्पलैः ।
तक्कोलाङ्कोलहिन्तालरसालपनसावृतः ।। २९ ।।

प्रत्यग्रकेतकीफुल्लकुरण्टकुटजावृतः ।
विभीतकहरीतक्यैर्मधुरैः सुकपित्थकैः ।। ३० ।।

भल्लातकशमीभल्ल शिंशिपालोध्रजाम्बवैः ।
मन्दारकर्णिकारैश्च दाडिमीनागकेसरैः ।। ३१ ।।

खर्जूरसर्जसरस नागार्जुनशिलीन्ध्रकैः ।
श्रीबिल्वामलकाद्यैश्च छत्राकैः कम्रकैङ्गुदैः ।। ३२ ।।

कदम्बैश्चम्पकैः फुल्लैः पुन्नागैर्वकुलैर्धवैः ।
बदरैः खदिरैश्चैव तगरैः पाटलैस्तथा ।। ३३ ।।

सीताफलैराम्रफलैर्घृतकीगणसुन्दरैः ।
करञ्जैः कृकभैर्नीपैः काश्मीरालक्तशोभितैः ।। ३४ ।।

वंशोद्दाममहारावनघर्घरमारुतैः ।
रत्नपत्रै रत्नफलै रत्नशुद्धैश्च गन्धितैः ।। ३५ ।।

नृत्यन्मयूरसङ्घैश्च कपोतैरपि(रणि)तोज्ज्वलः ।
नदन्नत्यूहसञ्चारी सारसारावसुन्दरः ।। ३६ ।।

कोकिलाकाकलीलाप शुकालापैकभासुरः ।
कुररारावसङ्कूजद्गुहामुखशतान्वितः ।। ३७ ।।

सुरम्यरमणीयाम्बुसरोवरशतावृतः ।
तन्मध्यभागविलसत्फुल्लरक्तसुपङ्कजैः ।। ३८ ।।

हल्लकोसलसङ्घैश्च नीलोत्पलकुलैरपि ।
तद्गन्धबन्धसुभगमारुतामोदतीरकम् ।। ३९ ।।

रत्नवालुकया छन्नं वृक्षच्छायासुखं शिवे ।
त्रिविष्टपे न वैकुण्ठे सत्यलोकेऽपि तादृशम् ।। ४० ।।

क्षणमात्रे मणिद्वीपसरस्तटनिवासिनाम् ।
रम्यसोपानपङ्क्तीभिर्मणिमण्टपपङ्क्तिभिः ।। ४१ ।।

पर्यन्तव(ल्ली)ल्लोलाच्छपुष्पगुच्छविराजितः ।
तिर्यग्रत्नमहाभागवलभीवलयैरपि ।। ४२ ।।

तत्रत्यगोपुरापारप्राकारैर्विततताम्बरैः ।
तत्राखण्डमणिस्तम्भ तोरणोद्यत्प्रभारसैः ।। ४३ ।।

तत्रैव पश्य शिखरं मणिद्वीपेश्वरस्य मे ।
द्राक्षैलापिप्पिलीमल्लीमुल्लीकुन्दाच्छवल्लिभिः ।। ४४ ।।

चन्द्रिकारत्निकापीतिसायंरागाच्छगुल्मकैः ।
रत्नवल्ल्यो रत्नकाण्डा रत्नपुष्प फलावृताः ।। ४५ ।।

गिरिमौलिस्थितं लिङ्गं पश्य दिव्यमिदं शिवे ।
रम्योत्तममणिस्वच्छभूधराकारगोपुरम् ।। ४६ ।।

तत्रान्तर्गृहमध्यस्थं मण्डलोज्ज्वलकान्तिभिः ।
नानासहस्रस्तम्भोत्थमण्टपावलिभासुरम् ।। ४७ ।।

रुद्रावतार चरितं वृषगोपुर कुम्भकम् ।
प्राकारवर संयुक्तं मणिमाणिक्यभूषितम् ।। ४८ ।।

नानावृक्षगणोद्भासि भासितामलदिक्तटम् ।
हरिन्मणिनिभं क्वापि हीरसारैकभासुरम् ।। ४९ ।।

इन्द्रनीलक गोमेद पुष्परागाविडूरकैः ।
प्रवाल पद्मरागोत्थ कुरुविन्दमणिप्रभम् ।। ५० ।।

नानाकारमिदं भाति कान्तिकाञ्चितपर्वतम् ।
अत्र लिङ्गमिदं पश्य रत्नगर्भमहान्तरे ।। ५१ ।।

लिङ्गं भुजङ्गाभरणं बिल्वपल्लवपूजितम् ।
आलेपितापीठतलं कर्पूरवरचन्दनैः ।। ५२ ।।

धूपितं तगरामोदैर्मणिद्वीपोद्यतं सदा ।
स्नापितं तन्महेशानि सुधासागरवारिभिः ।। ५३ ।।

लिङ्गस्याश्रयणाद्देवि द्वीपोऽयं पावनोत्तमः ।
एहि पश्यामि तल्लिङ्गं पूजयामि च शैलजे ।। ५४ ।।

इत्युक्ता गिरिजोत्फुल्लपङ्कजामलसुन्दरम् ।
हस्तमालम्ब्य भगवान् पश्यन्रत्नगिरिं शिवाम् ।। ५५ ।।

प्रदर्शयन्परां प्रीतिं अवाप शशिशेखरः ।। ५६ ।।

**ईश्वरः**

पश्येन्द्रनीलमणिकल्पित चारुशुण्डा-
दण्डाविराजितगजाः परितो भ्रमन्ति ।
आलूनशाखिवरभुक्तभुजाभिरामा-
रम्ये गिरौ करिवराः करिणीयुताश्च ।। ५७ ।।

उत्पुच्छचामरमिदं मृगयूथमेत-
दुड्डीनमेणकुलपोतमुखाभिरामम् ।
दूर्वाङ्कुरोद्धृतमुखं परिपश्यतीदं
शार्दूलरावघनभीतियुतं गिरीन्द्रे ।। ५८ ।।

नृत्यन्ति रत्नगिरिमौलिकलाकलापि-
जालैकपक्षहतिनृत्तशिखण्डिसङ्घैः ।
केकाः कपोतककुलं मणिपादमीशे-
पुंस्कोकिलाकुलमिदं वरहंसजालम् ।। ५९ ।।

गवां गणं पश्य नगेन्द्रमौलौ
स्वोधोभरेण महता पयसोऽनुधारम् ।
वत्सानुगं गिरितटे तृणतृप्तमीशे
धावद्गजेन्द्र हरिणी परिधावतीदम् ।। ६० ।।

सिह्मारवोद्बोधितसिन्धुरेन्द्र-
धावत्कुरङ्गनिकरैर्वनवातपोतैः ।
उत्पुच्छचामर सुखड्गलुलायश्रृङ्ग-
लीलाछटारवविभिन्नगुहादिवक्त्रम् ।। ६१ ।।

कस्तूरीमृगनाभिघर्षणमहावृक्षादिगन्धायितं
रम्योद्दामसुपुष्पशेखरतरूद्दामैश्च सद्गुच्छकैः ।
उत्फुल्लोत्तमकेतकीगतरजोधूलीयुतो वातकः ।
पुष्णात्यङ्गमिदं मदीयमगजे पश्याधुना शैलकम् ।।

मुस्ताम्रेडन कोलदंष्ट्र विवृता रत्नाच्छस्वच्छोपला-

धस्तादुत्थित सत्फणीन्द्रफणजै रत्नज्वलत्कान्तिभिः ।

युक्तं चित्रविचित्ररत्नजमहा सारोपलं सुन्दरं

रत्नाद्रिं परिपश्य देवि सुभगे सम्पूजयावो हरम् ।।

इत्यम्बाकरपङ्कजे स्वकरजाङ्गुष्ठेन तुष्टं शिवो

दृष्ट्वा लिङ्गमहो द्विजाः करतलैः स्पृष्ट्वागकन्यायुतः ।

संसिच्यामलकुम्भसम्भव सुधाधाराभिरेवेश्वरः

क्षीराज्यामृतशर्करामधुरसैर्दध्ना फलानां रसैः ।। ६४ ।।

गन्धाम्बु प्रतिवासितैश्च कलशैः संवेष्ट्य वासोभरै-

रालिप्यामलगन्धसान्द्रसरसैः पाटीरकर्पूरजैः ।

बिल्वीपल्लवकोटिचम्पकमहामल्लीभवैः पङ्कजै-

र्मन्दारैः करवीरपद्मजमहामालादिभिश्चाम्बिकाम् ।।

मुक्तैर्धूपविधूपनैस्तगरजैर्दीपैर्मणिप्रोद्यतै-

रन्नानां परिकल्पितोत्तममहासूपाज्यभक्ष्यैरपि ।

रम्यानेकसुगन्धिशाकफलजैस्ताम्बूलजालैः शिवौ

नैवेद्यामलपात्रकोटिवरकैर्दीपैः सहस्रोज्ज्वलैः ।। ६६ ।।

नीराज्य प्रमथादिसुन्दरमहावाद्यारवैः शङ्करः

सम्पूज्यामलरत्नसौधविलसद्रत्नप्रभासुन्दरम् ।

दृष्ट्वा लिङ्गमुमायुतोऽत्र भगवानास्ते च सिह्मासने

तन्नैवेद्यसुधारसैर्गिरिजयादत्तैश्च तुष्टा गणाः ।। ६७ ।।

विघ्नेशोऽप्यहमीश्वरस्य तु पदध्यानानुरक्तोऽभवं

देव्या चापि महेश्वरस्त्रिजगतां नाथो मुदा तत्र वै ।

द्वीपेशस्य निलजालये गिरिजया भोगान्प्रियान्भोजिन-

स्तत्प्रासादमहोरुसारशिखरे मञ्चे पराध्यास्तृते ।। ६८

शिश्ये शैलसुता सहायसुसखीयुक्तैर्गणैन्द्रैरपि

उद्यत्कान्तिमणिप्रभाविनिहतस्तोमे तमोराशिनां

चन्द्रासारकरैश्च चन्दनमहापुष्पैकभूभासुखम् ।। ६९ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे रत्नद्वीपवर्णनं नाम द्वादशोऽध्यायः ।।



## ।। त्रयोदशोऽध्यायः ।।

**ईश्वर उवाच**

पश्य देवद्रुमापारवनवाटीं महेश्वरि ।
विकचत्पुष्पशबलं बालादित्यसमप्रभम् ।। १ ।।

प्रवालमालाविततं मणिसुन्दरवेदिकम् ।
सन्नद्धकैः समुत्फुल्लै रत्नोद्यत्कान्तिसुन्दरैः ।। २ ।।

फलभारावृतापाररम्यदेवद्रुमैर्युतम् ।
सौन्दर्यधारासर्वस्वकुसुमामोदमोदितम् ।। ३ ।।

रत्नालवालमध्यस्थसुधासागरनीरकैः ।
पादपानां कुलं भद्रे तरुणारूणपल्लवम् ।। ४ ।।

उद्यदिन्दुकरस्पर्शि प्रवालवरकाञ्चितम् ।
देवमन्दारकैः फुल्लैः पर्वोद्यच्छशिसुप्रभैः ।। ५ ।।

रत्नपत्रफलैश्चैव कुसुमामोदिदिक्तटैः ।
मन्दारसुन्दरापाररसगन्धायिता दिशः ।। ६ ।।

प्रवालललितैः पत्रैः पल्लवैरतिसुन्दरैः ।
तत्पुष्पगन्धमधुरमरुद्व्रजभरैस्तलैः ।। ७ ।।

पटवाससुविस्तीर्ण भूभाग इव लक्ष्यते ।
भान्ति मन्दारतरवो ह्यभ्रङ्कषशिखोद्यतैः ।। ८

पारिजातकुलं पश्य हरिताखिलमुत्तमम् ।
प्रवालकाण्डविलसत्सुमगुच्छैर्विराजितम् ।। ९ ।।

तद्गन्धबन्धुरामोदरम्यगन्धवहाहृतम् ।
शारदाभ्रघनप्रख्यं विकासित दिशामुखम् ।। १० ।।

स्वच्छस्फटिकधारेव नयनानन्ददायकम् ।
कामदं सोमसङ्काशं मनसस्तुष्टिदायकम् ।। ११ ।।

विहारहारशयनरम्यं रत्नाच्छवालुकम् ।
चित्रवेदिकजालैश्च फुल्लपल्लवशोभितम् ।। १२ ।।

तत्पुष्पगुच्छसरसकेसरायितभूतलम् ।
तत्फलैर्विवृतात्यच्छगलन्मधुझरीभरैः ।। १३ ।।

सर्वकामदमत्यच्छं कामानामपि कामदम् ।
चिन्तामणिवरोत्तुङ्गरम्यप्राकारमध्यगम् ।। १४ ।।

एहि तद्वनमुत्कृष्टं पश्यावः कमलेक्षणे ।
इत्युक्त्वा तौ शिवौ तत्र रम्यरत्नाच्छपादुके ।। १५ ।।

पादाब्जे चारु संयोज्य जयन्त्यानीतके तदा ।
हस्तेन देव्या हस्तं स्वं संयोज्य परमेश्वरः ।। १६ ।।

ययौ मन्दमङ्गरागशोभितौ स्वाङ्गकान्तिभिः ।
स्वाङ्गकान्ति जितापार सुरत्नगणकोटिकौ ।। १७ ।।

स्वच्छरत्नवरासार देव्यङ्गहततापितः ।
मणिद्वीपः क्वचिद्भाति शर्वाङ्गसितकान्तिभिः ।। १८ ।।

कल्पवृक्षवनापारवृक्षजालं महेश्वरः ।
वनानां पतिरीशानो दर्शयामास तां शिवाम् ।। १९ ।।

पश्य कल्पवनं भद्रे भद्रं तव निरीक्षणम् ।
त्वदपाङ्गैकसङ्गेन नयनानन्ददं शिवे ।। २० ।।

सुरत्नमणिधाराच्छवेदिकं मणिवालुकम् ।
हल्लकोत्थसरासारमध्यपर्यन्तमारुतम् ।। २१ ।।

रत्नकान्तियुतोत्फुल्लरत्नपङ्कजसुन्दरम् ।
मणिमण्टपमेतद्वै चित्रविद्रुमपुत्रिकम् ।। २२ ।।

मणिसोपानसम्बद्ध सरोराशिसमावृतम् ।
सिह्मासनवरैः क्लृप्तं धूपितं मणिदीपकैः ।। २३ ।।

कल्पकोत्थसुमासारगन्धायितसुमारुतम् ।
हीरस्तम्भशतोपेतं सरोऽन्तर्मण्टपं शिवे ।। २४ ।।

तद्धीरसारगर्भोत्थ कान्तिकान्तजलावृतम् ।
तत्तरङ्ग प्रतिच्छायबिम्बताखिलमण्टपम् ।। २५ ।।

तत्राहं सुखमातिष्ठे त्वयासह सुमध्यमे ।
इति तत्राविशद्देव्या तत्सरोगणसंवृतः ।। २६ ।।

कल्पकाक्लृप्तसुमनोराशिभिर्भूषयच्छिवाम् ।
कस्तूरीरससंमिश्रपाटीरद्रवचन्दनैः ।। २७ ।।

देव्यङ्गमालेपितवान् स्वाङ्गमप्यथ शङ्करः ।
धूपवर्तिसहस्त्रौघ रत्नवृक्षाग्रधूपकैः ।। २८ ।।

मणिद्वीपमहावृक्षैः दिदीपे मण्टपं हि तत् ।
तद्धूपराशिमाणिक्यजालोद्यद्भासितान्तरे ।। २९ ।।

रत्नमण्डलसत्पादमहाहीराच्छकल्पिते ।
परार्घ्यास्तरणोपेते कल्पपुष्पसरावृते ।। ३० ।।

निषण्णः शिवया देवस्तत्फलान्यथ भक्षयन् ।
सुधावधीरणरससुरसामोदमेदुरैः ।। ३१ ।।

फलैरगात्ततस्तृप्तिं देवी देवो महेश्वरः ।
तत्रैव यापयामास दिवसं देवमानतः ।। ३२ ।।

विहसन् स हरो देव्या विस्मितान्तरया दृशा ।
देवी तदा महादेवं प्राह पङ्कजलोचना ।। ३३ ।।

**देवी (उवाच)**

त्रिणेत्र जगदाधारबन्धुरामलविग्रह ।
न कैलासे न लोकेषु क्वापि दृष्टेदृशी स्थितिः ।। ३४ ।।

मणिद्वीपे यादृशी मे परा तृप्तिर्महेश्वर ।
मणिद्वीपेश्वरस्यास्य रत्नौघनगवासितः ।। ३५ ।।

प्राकारगोपुरोत्तुङ्गरचना महदद्भुता ।
लिङ्गं विचित्रमणिजं नानाकान्तिजभासुरम् ।। ३६ ।।

भुजङ्गभोगाभरणं कण्ठे नीलमणिप्रभम् ।
तत्फणावृत्तसन्मौलिदर्शनात्सर्वकामदम् ।। ३७ ।।

तद्रत्नशिखरोद्भासिवृषभावलिशोभितम् ।
विस्मयानां स्मयकरं सौन्दर्यादपि सुन्दरम् ।। ३८ ।।

रम्यं विहारसदनं त्वया मे कल्पितं शिव ।
परमानन्ददं मेऽद्य यथा त्वद्दर्शनं मम ।। ३९ ।।

तथैवायं मणिद्वीप इयं कल्पकवाटिका ।
इति देव्या वचः श्रुत्वा ततोऽन्तर्वरगर्भके ।। ४० ।।

मणिजालयुतोत्तुङ्गप्राकारान्तः प्रकल्पिते ।
नीपानोकहकादम्बवनराजिविराजिते ।। ४१ ।।

चिन्तामणिमणीक्लृप्तसौधायुतविराजितम् ।
सुरम्यतन्मणिस्तम्भं उत्कीर्णेद्यत्सुपीठकम् ।। ४२ ।।

शाणोल्लीढमणिव्रात चाकचिक्यैकभासुरम् ।
नीपोपवनसौन्दर्यं दर्शयामास विश्वपः ।। ४३ ।।

एतन्नीपकुलप्रफुल्लसुमनापाराच्छगन्धावृतं
नेत्रानन्दकरं सदैव विततं चाम्लानवर्जं शिवे ।
दिव्योत्तुङ्गतरङ्गसङ्गतसुधासिन्धोर्जलैः सिक्तम-
प्यन्तस्तन्मणिजालकान्तिततिभिः प्रोद्यच्छिखं सुन्दरम् ।।

रत्नोद्यन्मणिवेदिकाशतयुतं धारागृहैः शोभितं
बर्हाक्रीडनबर्हिकोकिलमहाहंसालिपालीयुतम् ।
कापोतावलिलीलया सुमधुरारावै रणच्छिञ्जिनी-
मञ्जीरध्वनि पादपङ्कजमुमे तत्र त्वया न्यस्यताम् ।।

इत्युक्त्वा जगदम्बया त्रिजगतां नाथः शशीशेखरः ।
दृष्ट्वा नीपवनं सुसुन्दरमहापुष्पाच्छगुच्छावृतम् ।
तद्वातैरतिसुन्दरोत्तममहाशीतर्धिसाराकरै-
र्गन्धानन्दितघ्राणतर्पितमरुज्जालैर्विशालैरपि ।। ४६ ।।

देव्या नीपवनं विलोक्य सदयं चातिष्ठदीशायुतो ।
रम्ये तन्मणिवेदिकास्तृतमणीमञ्चे जगन्नायकः ।। ४७ ।।

**ईश्वरः (उवाच)**

नीपानां कुलमेतदद्य गिरिजे ह्यत्यन्तपापापहं
गोपायन्तमिवैनसः प्रतिदिनं त्वद्भक्तियुक्ता मुने ।
वेपन्तः पवनालिसारचलनैः कोपैर्विहीनाश्च ये
धूपोद्यन्मधुगन्धसारसुभगं पश्याद्य मोदास्पदम् ।। ४८ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे मणिद्वीपवर्णनं नाम त्रयोदशोऽध्यायः ।।



## ।। चतुर्दशोऽध्यायः ।।

**स्कन्दः**

मञ्चेषु देवौ हि तदा चिक्रीडतुरहो द्विजाः ।
शम्भोस्तत्रैव वसतिः कृता नीपवने तदा ।। १ ।।

नीपशाखालम्बितोद्यच्छृङ्खलामञ्चके शिवौ ।
नगराजाङ्गसम्भूता तत्रस्था प्राह शङ्करम् ।। २ ।।

श्लथधम्मिल्लमल्लीनां सरालिकलिकाभरैः ।
चन्दनालेपसुभगा गात्रेणालिङ्ग्य शङ्करम् ।। ३ ।।

नयनाञ्जनचिह्नोद्यत्कपोलतटसुन्दरम् ।
स्वकुचागाढमृदित कुङ्कुमाङ्कितवक्षसम् ।। ४ ।।

विधूतबिम्बसाम्राज्यमधुरं सा महेशितुः ।
वारुणीदिक्समाक्रान्तप्रातःशशिसमत्विषम् ।। ५ ।।

चुम्बनालिङ्गन प्रौढ रसानन्दोल्लसा शिवा ।
प्राह तं देवदेवेशं प्राञ्जलिर्गिरिजा तदा ।। ६ ।।

**गिरिजा (उवाच)**

देव देव महादेव शरणागतवत्सल ।
महेश्वर तपोराशे दयाराशीश शङ्कर ।। ७ ।।

इन्दुधामसमानास्य बालेन्दुकृतशेखर ।
पश्यामि द्वीपमध्यस्थं त्वया चिन्तामणीचितम् ।। ८ ।।

महारत्नवरोतुङ्गसौधान्तर्गृहमीश्वर ।

**स्कन्दः (उवाच)**

इत्युक्तं तद्वचो देव्याः शिवः शम्भुर्महेश्वरः ।। ९ ।।

शिवे स्वहृदयाकार सन्धितौघविचित्रितम् ।
उत्कीर्ण रत्नलोलाभ्यां प्रभाधिकविनिर्मितम् ।। १० ।।

देव्यै तद्दर्शयामास विश्वात्मा विश्वभावनः ।
चेष्टितं तस्य को वेद वेदवेद्यस्य चेशितुः ।। ११ ।।

मनागिति च जानेऽहं तच्चेष्टितमिदं जगत् ।
अधिष्ठिताश्च यास्याम स्तदधिष्ठानचेष्टितम् ।। १२ ।।

अपूर्वं यन्मया दृष्टं तदाख्यामि च तच्छृणु ।
तन्मे देव्या महादेवो निरगाद्दुरितान्तकः ।। १३ ।।

तत्रोपवनमध्यस्थसिह्मासनवरे तदा ।
तद्दर्शयामास तदा देव्यै चिन्तामणीततम् ।। १४ ।।

सौधराजोत्तमं देवः श्रीचक्राकारसुन्दरम् ।
चिन्तामणिसमूहानां ज्योतिः प्रान्तततताम्बरम् ।। १५ ।।

चक्रकोणविवृत्तोद्यन्मणितोरणपालिभिः ।
वलभीसुन्दराकारस्तम्भं कुम्भोज्ज्वलोच्छ्रयम् ।। १६ ।।

सौधाग्रविविधोच्छ्रायमणीकलशदिङ्मुखम् ।
महासिद्ध्यष्टकस्यापि नीपैः फलकुलावृतैः ।। १८ ।।

पर्यन्तकलितापार आलवालमणिद्युति ।
प्रासादेषु प्रतोलीषु प्राकाराग्रे गृहाङ्गणे ।। १९ ।।

गोपुरेषु विचित्रेषु प्राकाराग्रे गृहाङ्गणे ।
मणिमाणिक्यरत्नानां उच्चलच्चारुरोचिषाम् ।। २० ।।

ज्येतिर्जालैर्जटिलितं शिवेदमवलोक्यताम् ।
द्यावाभूम्योरन्तराले लोकजालैस्तथा भुवि ।। २१ ।।

विष्णुब्रह्मेशभवने दिक्पालानां पुरे तथा ।
नागानामपि लोकेषु दैत्येन्द्राणां पुरीष्वपि ।। २२ ।।

कैलासे वा महादेवि चिन्तामणिगृहाधिकम् ।
ईदृक्सम्पत्तिसम्भारो न कुत्र भुवनेश्वरि ।। २३ ।।

उद्यत्कान्तिमहासौधमणिरञ्जितपीठभूः ।
चारुचित्रविचित्राढ्य चिन्तामणि गणद्युतिः ।। २४ ।।

भास्वरं सुमनोद्दामकल्पाकानां भरैरपि ।
नीपव्रातमहागन्धवातसुन्दरदर्पितम् ।। २५ ।।

धूपधूमावृतापारमणिदीपायुतोज्ज्वलम् ।
सुरम्यहर्म्यं पश्याद्य लोचनानां त्विडामुषम् ।। २६ ।।

मनः सर्वस्वरचितं मया तव कृतं शिवे ।
मणिजालकसुच्छिद्रतरलोदारकान्तिभिः ।। २७ ।।

दिङ्मोहजनकं चैतद्दर्पणोदरसुन्दरम् ।
हीरसारघनापार कल्लोलसितदिक्तटम् ।। २८ ।।

विचित्रसूत्रवैदूर्यरञ्जिधाराकुलाकुलम् ।
गोमेदगर्भमेदोद्यच्चारुभित्तिविभूषितम् ।। २९ ।।

पुष्परागमणिज्योतिस्तम्भविद्रुमपुत्रिकम् ।
महेन्द्रनीलसङ्क्लृप्तस्तम्भपीठोज्ज्वलत्पदम् ।। ३० ।।

प्रवाललतिकालोल ज्वालातलकलाकुलम् ।
मुक्तागुच्छसरापारलम्बितोत्तमपीठकम् ।। ३१ ।।

वलभीकुलजालम्बि नानारागसमावृतम् ।
महामाणिक्यवलभीनिर्यत्कान्तिवृता दिशः ।। ३२ ।।

आताम्रा इव राजन्ते साम्यं साम्यं सुधाशने ।
यत्रातिमित्रतेजोभिः शलाकाभिर्विचित्रितम् ।। ३३ ।।

गवाक्षितं पक्षिगणैः पालीपालीमरालकैः ।
सिह्माक्रान्तगजप्रोद्यच्छुण्डादण्डादिकीलितैः ।। ३४ ।।

शार्दूलमुखवृत्तोत्थघोणाचुम्बितनासिकैः ।
मरालराजमुखग मुक्तासक्तलतावृतैः ।। ३५ ।।

कपोत पालीमणिजारक्त पादाङ्कभासुरैः ।
मयूरपक्षसन्दक्षमयूरवरपद्धतैः ।। ३६ ।।

विस्तृतालम्बिपुच्छाग्रभारसारककल्पितैः ।
हंसालिस्कन्धमध्यस्थरत्नसौधालिकातते ।। ३७ ।।

उद्वहन्तः श्रमोद्भ्रान्तनयनासारसुन्दरम् ।
भुजाभ्यां पीनवृत्ताभ्यां कल्पिता मणिपूरुषाः ।। ३८ ।।

सिह्मास्यतिर्यग्दंष्ट्राग्रजिह्वानिर्यत्सुतारके ।
नयेमेमं महापारमणिना कल्पिताम्बिके ।। ३९ ।।

पश्याधुना मणिमयैः पुरुषैर्धृतचामरैः ।
कीललीलाविचलनैः पुत्तल्यो व्यजनीकराः ।। ४० ।।

सेवन्ति तां महादेवीं स्वजाड्य विनिवृत्तये ।
यन्त्रासारभ्रमद्द्वाररथाकृतिगृहं शिवे ।। ४१ ।।

धूयमानपताकाश्च[1] तुरङ्गावलि शोभितम् ।
वहन्ति श्रीयुतं यस्मिंस्तुरगाः कामवेगिनः ।। ४२ ।।

प्रोच्चलन्त इवाभान्ति दिव्ये रथगृहे शिवे ।
[2]सिहेघ्राणादमिदमत्युदारकेसरीगणैः ।। ४३ ।।

सहस्रं धवलापारसटाशोभितकन्धरैः ।
वहन्ति धूतमसृणमणिजालयुतस्य च ।। ४४ ।।

गजसौधमिमं पश्य दिव्य सिन्धुरमूर्धगम् ।
चलदत्युग्रदण्डोत्थ[3]मणीक्षुवरहर्षितम् ।। ४५ ।।

विधृतोत्तुङ्गकुम्भस्थ दिव्यपीठमणिद्युति ।
इन्द्रनीलमयैः क्लृप्तैर्गजैः पश्याम्बिके तव ।। ४६ ।।

---

1. बहुत्वं पुंस्त्वं च नोपपद्यते ।
2. सिह्मेन्द्रनादयुतमत्युदारं . . . ।
3. शुण्डोत्थेति

इत्युक्त्वा गिरिराजराजतनयामानन्दयञ्छङ्करो
दिव्यापारमणिद्युति प्रविलसन्मौळिस्थकुम्भोज्वलान् ।
प्रासादान् विविधानकृत्रिममहाचित्रस्य विश्वेशितु-
श्चित्रे कल्पितसज्जकैरनुदिनं तुष्टाष्टमूर्तिं शिवाम् ।।

स्वोत्फुल्लामलपङ्कजोत्तमकरैरालिङ्ग्य हृष्टान्तरा
धारासारगृहेषु कालमनयत्कालातिगस्येशितुः ।
पर्यङ्काङ्कगतिप्रचारविहितापारानुकारादरा
देवी सा परमेश्वरस्य ललितं पादाम्बुजं सेवति ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे श्रीचक्रसौधवर्णनं नाम
चतुर्दशोऽध्यायः ।।



## ।। पञ्चदशोऽध्यायः ।।

ईश्वरः (उवाच)

पश्य देवि महामञ्चं पुष्पसारच्छदावृतम् ।
हिरण्यानर्घ्यवस्त्राढ्यं महाकशिपु[1] शोभितम् ।। १ ।।

सौधोद्यतपताकाभिरुद्यच्छशिशतायुतम् ।
पुष्पच्छदपटप्रान्तलोलम्बितसुमौक्तिकम् ।। २ ।।

रत्नजालिकयालोलललत्कान्तितते गृहे ।
सुगन्धिगन्धबहुलं घ्राणतर्पणमुत्तमम् ।। ३ ।।

चिन्तामणिवरोत्तुङ्गसौधमध्यावलम्बितम् ।
मणिश्रृङ्खलिकाकीलाजालिकाललितोत्तमम् ।। ४ ।।

लम्बमानझणारावविताजनितांबरम् ।
वितानालम्बिसहजगुच्छामुक्तासरावृतम् ।। ५ ।।

मणिजालवरालम्बिवातपोतचलद्द्युति ।
अर्चाभिश्चर्चितं तत्र वितानसरलम्बिभिः ।। ६ ।।

उद्यदिन्दुसुधाचुम्बिधवलिम्ना युताधिकम् ।
दिव्यचिन्तामणिगृहं सुबन्धुरसोत्कटम् ।। ७ ।।

मणिश्रृङ्गारजात्यच्छसुधापूरैः प्रपूरितम् ।
कर्पूरसारतगरकस्तूरीवरचन्दनम् ।। ८ ।।

---

1. कशिपु - a mat, a pillow, a bed.

मणिपात्रस्थितं पश्य प्रावृतं रत्नचेलकैः ।
सुधारसभरापारकल्पवृक्षफलाकुलम् ।। ९ ।।

मणिपात्रोल्लसत्कान्तिविदारितगृहाङ्गणम् ।
धूपोद्यन्मणिपात्रैश्च धूपधूपितदिङ्मुखम् ।। १० ।।

धूपजोत्तुङ्गधूमोत्थगन्धबन्धुरमारुतम् ।
कल्पवृक्षसुमोद्भूत सरशेखरकैसरैः ।। ११ ।।

प्रोद्यत्सिन्धुरशुण्डाभसरगुच्छैः सरैस्तथा ।
मणिपात्रैर्वृतं पश्य पुष्पसङ्गतवायुभिः ।। १२ ।।

बद्धगन्धवहासारगृहमेतत्सुमध्यमे ।
उद्यच्छशिकलाकार पुष्पशोभितकान्तिभिः ।। १३ ।।

विनादितमहावीणा अनाहतसुतन्त्रिभिः ।
मृदङ्गरङ्गिततलशब्दप्रोद्यद्ध्वनीभरैः ।। १४ ।।

पूरितान्तगृहंमुखं पश्याम्ब कमलेक्षणे ।
नेदृशं शयनीयं ते कैलासेऽपि मनोहरम् ।। १५ ।।

ब्रह्मविष्णुमहेशान ईश्वरा मञ्चपादुके ।
सदाशिवोऽस्य फलकः सोपधानार्थतत्वके ।। १६ ।।

निषण्णा त्वं घनानन्दरसामोदितबन्धुरा ।
अधिशेष्व महादेवि दिव्यचिन्तामणीगृहे ।। १७ ।।

इत्युक्त्वा तां समालिङ्ग्य देवः कामाङ्गनाशनः ।
कन्दर्पदर्पनाशोद्यत्कोटिकन्दर्पसुन्दरः ।। १८ ।।

कामेश्वराकृतिरभूत्सिन्दूरोत्तमविग्रहः ।
चञ्चच्चन्द्रकलामौलिलोचनत्रयदीप्तियुक् ।। १९ ।।

तमालनीलसुगलरक्तालक्तलसत्करः ।
रक्तकञ्जोपमानास्यो रक्तपङ्कजपाणिकः ।। २० ।।

रक्तपङ्कजधामाङ्घ्रिर्मणिजालविभूषणः ।
रक्ताम्बरधरासारप्रसारितदिशामुखः ।। २१ ।।

तमस्स्तोमतिरस्कारिरत्नाभरणभूषितः ।
शुभगन्धावृतोत्तुङ्गपीनवक्षोरुबाहुभिः ।। २२ ।।

एणं च परशुं चैव दधानश्च वराभये ।
तस्मिन्निषण्णः पर्यङ्के पश्यन्देव्यास्तदाननम् ।। २३ ।।

सम्फुल्लमिव सन्दर्शरक्तपङ्कजसन्मुखाम् ।
अम्बामम्बुरुहाभाक्षीं त्रिणेत्रां चन्द्रशेखराम् ।। २४ ।।

मकुटीघटितापाररत्नजालैकभासुराम् ।
बिम्बकान्तितिरस्कारिरदच्छदविराजिताम् ।। २५ ।।

तिलकोद्भासितमुखां ताटङ्कद्युतिकर्णकाम् ।
कर्णालम्बितरत्नाच्छवाळीवलिविराजिताम् ।। २६ ।।

दिव्यचूडामणिस्फारचञ्चच्चन्द्रिक(न्द्रक) सूर्यकाम् ।
सीमन्तरेखायितसुप्रभोद्यदलिकायुताम् ।। २७ ।।

मणिमाणिक्यखचितललन्मुक्ताफलावृताम् ।
उद्यत्कविसमस्वच्छनासाभरणभासुराम् ।। २८ ।।

कण्ठमण्डलिकाक्लृप्तरत्नकण्ठसरद्युतिम् ।
चिन्ताकलम्बितस्वच्छमुक्तागुच्छविराजिताम् ।। २९ ।।

मणिमुक्तासरापारललत्पदकसन्ततिम् ।
रत्नवैडूर्यगोमेदपुष्परागहरिन्मणिम् ।। ३० ।।

कल्पिताच्छमहारागपद्मरागोज्ज्वलप्रभाम् ।
भासितापारसत्काञ्चीकटीतटमनोहराम् ।। ३१ ।।

रम्यकङ्कणिकाक्लृप्तमणिमाणिक्यमौक्तिकैः ।।
खचितापारसारोद्यद्वरहस्तसुसंवृताम् ।। ३२ ।।

बाहुबन्धमहानागफणाबन्धोरुमौक्तिकैः ।
जलप्रभै रत्नगुच्छप्रभाभास्वरशोभिताम् ।। ३३ ।।

वङ्किकामुखसंफुल्लरत्नसेवन्तिकाततिम् ।
वेणीमण्डलसङ्क्लृप्तरत्नसेवन्तिदीधितिम् ।। ३४ ।।

पुराकेतशिरोत्तुङ्गमुक्तारत्नैकशेखराम् ।
कुमुदाकारमुद्राच्छमणिसुन्दरसन्ततिम् ।। ३५ ।।

मल्लिकामोदिधम्मिल्लमुल्लिकालिसरावृताम् ।
रक्षामणिमयाकारछत्राकवर[1] शोभिताम् ।। ३६ ।।

रत्नाङ्गुलिप्रवितत प्रभाजाललसत्कराम् ।
[2]निचोलत्कीलितापार नानारत्नततिद्युतिम् ।। ३७ ।।

---

1. छत्राक - Mushroom. 2. निचोल - A cover, A wrapper, A bed cover, the cover of a litter (frame work supporting a bed.)

रत्नाञ्चललसद्वस्त्रां कुङ्कुमारुणसुन्दराम् ।
कस्तूरीघनपाटीरसारलेपित सत्कुचाम् ।। ३८

चन्दनद्रवदिग्धाङ्गीं मुग्धस्मितमनोहराम् ।
अङ्गुष्ठिकालसद्धीरकलिकोत्कान्तिताम्बराम् ।। ३९ ।।

घुमग्घुमितसद्वस्त्रां [1]पट्ट(ट)वासैकवासिताम् ।
चतुर्भुजपदाम्बुजां[2] निकजाडति कोज्ज्वलाम् ।। ४० ।।

मञ्जीररत्नजरणशिञ्जन्मञ्जुल[3]निस्वनाम् ।
चतुर्भुजेक्षुकोदण्डपाशाङ्कुशवरोज्ज्वलाम् ।। ४१ ।।

सौन्दर्यधारासर्वस्वां तामालिङ्ग्याह सुन्दरीम् ।
महादेव्या निषण्णोऽभूत्तस्मिन् मञ्चे मनोहरे ।। ४२ ।।

सुधापाटीरसास्वादी दिव्यचन्दनचर्चितः ।
दिव्यपुष्पधरासारलसद्गलतरङ्गकः ।। ४३ ।।

रत्नवृक्षोद्यतापारधूपवर्तिसुतर्पितः ।
मणिदी(द्वी)पमहावृक्ष प्रोद्भासितदिगन्तरः ।। ४४ ।।

द्रवत्पुष्पोत्थसलिलासारशीकरसुन्दरः ।
विजहार महादेवः कामेशः कामनाशनः ।। ४५ ।।

कामेश्वर्या महादेव्या चिरकालं द्विजोत्तमाः ।। ४६ ।।

---

1. पटवास - perfumed Powder.

2. शोधनीयं पद्यमिदम् ।

3. रत्नजरणच्छिञ्जन्मञ्जुल . . . . . . . ।।

चिन्तामणीसारगृहान्तराल-
विद्योतितापारमणीन्द्रजालैः ।
मञ्चे सुगन्ध्युत्तरसच्छदावृते
देव्या हरस्तत्र मुदा विजह्रे ।। ४७ ।।

नानागन्धसुमानुमोदितरसासारैकशुद्धान्तरः
कामेशः कमनीयसौरभभरैरानन्दितस्वान्तरः ।
कामेश्या शिवया कृपारसभरैः सङ्क्लृप्तभोगोत्सवै-
र्जातानन्दभरैः सहैव करुणामूर्तिः कृपासागरः ।। ४८ ।।

**ईश्वरः आह**

नित्यारक्षणदीक्षितेन नगरं ख्यातं वरं श्रीपुरं
द्वीपेऽस्मिन्मणिकल्पिते तदुपरि मध्यस्थितं ते गृहम् ।
यद्वा चिन्तितकामदानमणिभिः क्लृप्तं तवार्थे मया
नित्याभिः पुरमेतदद्य कृपया सम्भुज्यतां भूतिभिः ।। ४९

ब्रह्माविष्णु (विष्णुब्रह्म) सदाशिवेश्वरमहारुद्रोरुमञ्चेश्वरी
स्तीर्णे तल्पवरे शिवाङ्कनिवसा श्रीकामदानेश्वरी ।
कामाख्येन महेश्वरेण त्रिजगन्नाथेन हर्षान्तरा
नित्याभिः परिषेविता भगवती पायात्सदा मां द्विजाः ।। ५०

।। इति श्रीशिवरहस्ये द्वितीयांशे चिन्तामणि सौधवर्णनं नाम
त्रयोदशोऽध्यायः ।।
।। शिवार्पणम् ।।

## ।। षोडशोऽध्यायः ।।

**मुनयः (ऊचुः)**

कथं देव्या तारकारे पुरं श्रीपुरनामकम् ।
कल्पितं श्रीमहेशाज्ञावशतस्तद्वदाद्य नः ।। १ ।।

**स्कन्दः (उवाच)**

यथा देव्या निर्मितं च श्रीपुरं श्रृणुत दिजाः ।
कामेशेन द्विजेनैव (शिवेनैव) सा प्रोक्ता परमेश्वरी ।। २ ।।

ललिता श्रीमहादेवी सैव त्रिपुरसुन्दरी ।
मनसा चिन्तयामास पुरं तत्र मनोरमम् ।। ३ ।।

मणिप्राकारशतकैर्भूधराकारगोपुरैः ।
मणिमाणिक्यखचित नवरत्नोरुकान्तिभिः ।। ४ ।।

प्रफुल्लसुमनामोदिरत्नवृक्षवनावृतम् ।
कल्पवाटीपरिवृतनीपोद्यानविराजितम् ।। ५ ।।

सुधासिन्धुतरङ्गौघरम्यपर्यन्तमारुतम् ।
नवरत्नागारसौधकुम्भोद्यत्कान्तिकान्तितम् ।। ६ ।।

दिव्यमुक्तावलीक्लृप्तसरावलिविभूषितैः ।
गोमेदपुष्परागोद्यत्प्रवालमणितोरणैः ।। ७ ।।

हीरजालकसञ्छन्नकुम्भमौलिविराजितैः ।
सौधपङ्क्तिसमुत्सेधविशालायुतशस्तदा ।। ८ ।।

मणिमाणिक्यखचितनवरत्नविचित्रितैः ।
धूपितैस्तगरामोदपाटीरोशीरचन्दनैः ।। ९ ।।

पुरद्वारैर्धवलितगवाक्षवलभीयुतैः ।
मण्टपावलिसञ्छन्नमौलिपालिततद्युतिः ।। १० ।।

मणिरोचिचितादर्श कुट्टिमोद्यत्कवाटकैः ।
प्राक्पश्चादुत्तरे चैव दक्षिणे पूर्वतः क्रमात् । ११ ।।

मणिगोपुरमौलिस्थहीरोद्यत्कलशप्रभैः ।
तिरस्कारितचन्द्रार्कैः प्राकारैर्मणिकल्पितैः ।। १२ ।।

नियुतायुतगोद्भासिसमुच्छ्रायोरुमण्डलैः ।
गोमेदपुष्परागेन्द्रनीलवैडूर्यहीरजैः ।। १३ ।।

मुक्ताविद्रुमरक्ताच्छततिकान्ति विराजितैः ।
गरुडोद्गाररत्नानां मण्टपावलिशोभितैः ।। १४ ।।

हीरसौधमणिप्रोद्यद्वातायनगवाक्षकैः ।
देवीविहारसदनैर्मदनान्तकरस्य च ।। १५ ।।

पर्यन्तरत्नमालादिछन्नमौलिविराजितैः ।
चन्द्रोपलमहासौधैश्चन्द्रासारैकनिर्झरैः ।। १६ ।।

रम्यादर्शमहासौधै रत्नपुष्पविराजितैः ।
पाळीपालीचितानेकमयूरवरहंसकैः ।। १७ ।।

गजसौधैर्हंससौधैः सिंह्मसौधैश्च भास्वरैः ।
तुरङ्गरथसौधैश्च शार्दूलोत्तमसौधकैः ।। १८ ।।

तत्तत्प्राकारान्तराले श्रीदेव्या मनसाऽऽततैः ।
सुरत्नतरवस्तत्र मणिपुष्पकलावृताः ।। १९ ।।

चन्दनानां च विपिनैर्नयनानन्ददायकैः ।
कल्पवृक्षोरुविपिनैर्नीपोपवनसुन्दरैः ।। २० ।।

कदम्बवनराजीभि(भी) राजद्राजीववापिकाः ।
तत्प्रान्तमध्यसौधैश्च नवरत्नविचित्रितैः ।। २१ ।।

धारासारगृहैश्चैव भ्रमद्रथगृहैस्तथा ।
मन्दारपारिजातोत्थवनवायुसुगन्धितैः ।। २२ ।।

प्रत्यग्रकेतकोद्भासिचम्पकोद्दामसौरभैः ।
कुरवाशोकवकुलरसालमधुकैर्धवैः ।। २३ ।।

खर्जूरपूगनारेलनागपुन्नागलोध्रकैः ।
तक्कोलाङ्कोल हिन्तालमणिरम्भाकपित्थकैः ।। २४ ।।

तगरागरुकेदाररदेवदारुमधूककैः ।
चिरबिल्वैश्च बिल्वैश्च मधूकाम्रातकैर्ध्रुवैः ।। २५ ।।

वल्लयस्तत्र राजन्ति द्राक्षेलापिप्पलीयुताः ।
मरीचयः कुन्दवल्यः जाजीकाः चन्द्रिकायुताः ।। २६ ।।

तद्रम्यकुसुमामोदिसौम्यबन्धुरमारुतः ।
हंसा मयूराश्च पिका कोकसारसपङ्क्तयः ।। २७ ।।

कापोतशारिकारावमृगाश्च चमरीगणाः ।
कुरङ्गा हस्तिनः कोलाः सञ्चरन्ति वने मुदा ।। २८ ।।

नयनानन्ददं नित्यं श्रीपुरे मणिद्वीपके ।
पद्मिन्यो विविधास्तत्र रत्नसोपानमण्डिताः ।। २९ ।।

प्रान्तरत्नोद्यतमहामण्टपावलिभासुराः ।
तत्र देवद्रुमापारवनराजिविराजितम् ।। ३० ।।

तत्प्राच्यां मणिसङ्क्लृप्तं दण्डिनीधाम सुन्दरम् ।
नानारत्नमणिभ्राजिसिन्धुरौघविराजितम् ।। ३१ ।।

भद्रमन्द्रैर्भद्रमृगैश्चतुर्दन्तालिशोभितैः ।
कटस्रवन्मदभरैः कुम्भोद्यत्पाण्डरारुणैः ।। ३२ ।।

मणिग्रैवेयघण्टादिकुथाङ्कुशविभूषितैः ।
पूर्वतो भाति शैलेन्द्रनिभैर्वारणसत्तमैः ।। ३३ ।।

दक्षिणे तत्र प्राकारो नवरत्नविराजितः ।
मन्त्रिण्यास्तत्र तद्धाम नवरत्नविचित्रितम् ।। ३४ ।।

उच्चैःश्रवाधिकैरश्वैर्नानावर्णैर्बलोत्कटैः ।
कल्माषैस्तित्तिरप्रख्यै रक्तकर्बुरश्वेतकैः ।। ३५ ।।

नीलपीतकमञ्जिष्ठैर्मयूरसदृशैर्हयैः ।
तत्राश्वकोटिभिर्युक्ता मन्त्रिणी सेविता तदा ।। ३६ ।।

मन्त्रिण्याः पश्चिमे धाम नवरत्नविचित्रितम् ।
कुम्भोद्यन्मणिक्लृप्ताक्षचक्रजालपताककैः ।। ३७ ।।

युगन्धराक्षफलकैर्घोणाकर्बुरशोभितैः ।
रथैश्च कोटिभिस्तत्र शोभिता मन्त्रिणी तदा ।। ३८ ।।

वाराह्याश्चोत्तमं धाम रत्नावलिविभूषितम् ।
साापि प्रमुदिता नित्यं पाति तं योगिनीगणैः ।। ३९ ।।

नवकोटिभिरत्युग्राः प्रासासिवरपाणिभिः ।
नित्यानामन्तरा सद्म पद्मरागमणीततम् ।। ४० ।।

ततो हि परितस्तत्र ज्वालामालिनिका ततः ।
प्राकारो वह्निऽऽवीतः पर्यन्तज्वालशोभितः ।। ४१ ।।

अनिन्धनो दहत्येष स्वशिखालेहिताम्बरः ।
अहोरात्रमविश्रान्तो ज्वालाव्याप्तदिगम्बरः ।। ४२ ।।

मातरो वटुकाश्चैव डाकिन्यो योगिनीगणाः ।
यान्ति तत्रान्तरे देव्याः प्राकाराणां शताष्टकम् ।। ४३ ।।

मार्ताण्डभैरवाश्चैव तथैवानन्दभैरवाः ।
प्रमोदभैरवाश्चैव तथा वै मोदभैरवाः ।। ४४ ।।

प्राच्यां प्रतीच्यां तत्पान्ति दक्षिणे च तथोत्तरे ।
सुधाकूपाः सुधावाप्यो घृतक्षीरदधिस्रवाः ।। ४५ ।।

मधुस्रवास्तथा नद्यः पुटके पुटके मधु ।
सुधाफला सदा वृक्षा अम्लानानि सुमान्यपि ।। ४६ ।।

योजनायुतगन्धीनि नेत्रानन्दकराणि च ।
द्वीपोऽयं कुमुदाकारः सुधावार्धि तरङ्गकैः ।। ४७ ।।

रञ्जितः परितो भाति मणिसारकैसुन्दरः ।
लक्षद्वयं योजनानां मनसा शिवनिर्मितः ।। ४८ ।।

तत्र चिन्तामणितते सौधे परमभास्वरे ।
कामेश्वर्या च कामेशस्तत्र नित्यमुपासते ।। ४९ ।।

नानाभोगविहारैश्च नित्याभिः परिषेवितः ।
ब्रह्मविष्वीश्वर सदाशिवरुद्रोरुमञ्चके ।। ५० ।।

निषण्णः परया देव्या कामेशः कामदायकः ।
कामेश्वर्या सदैवास्ते कामदानैकदीक्षितः ।। ५१ ।।

कोटिकन्दर्पदर्पघ्नः कपर्दैणाङ्कशोभितः ।
सुरक्तपङ्कजाकारविग्रहः सुन्दराकृतिः ।। ५२ ।

जपासुमनिभाधिक्यकामेश्या कान्तिमत्तया ।
सेवितो विविधैर्भोगैनित्याभिः परिषेवितः ।। ५३ ।।

**स्कन्दः (उवाच)**

पाथोजातभवप्रियाकरमहापङ्केरुहाध्यासिता
पाणिं लोलघृताक्षचामरगणैः संवीजिता सा शिवा ।
नित्याभिः परिसेविता प्रमथपेनाध्यास्त मञ्चोत्तरं
स्वस्यारक्तनखांशुनिर्गतहरिब्रह्मेशलीलायुता ।। ५४ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे श्रीचक्रवर्णनं नाम षोडशोऽध्यायः ।।
।। शिवार्पणम् ।।



## ।। सप्तदशोऽध्यायः ।।

**जैगीषव्य उवाच**

श्रुतमेतन्महाख्यानं स्कन्द त्वत्तोऽखिलार्थदम् ।
मणिद्वीपे महादेव्याः श्रीपुरस्यापि वर्णनम् ।। १ ।।

पराशक्तेर्महासौधश्चिन्तामणिगणाञ्चितः ।
सुधासिन्धोर्मध्यगतकल्पवाटीवनावृते ।। २ ।।

नीपोपवनपर्यन्तं श्रुत्वाऽहं नितरां मुने ।
अत्यन्तं विस्मयाविष्टः परिपूर्णमनोरथः ।। ३ ।।

सर्वज्ञ हृदयानन्द गौरीहृदयनन्दन ।
तारकारे तदा देवः किं चकार शिवायुतः ।। ४ ।।

तन्मे वद विशेषेण मह्यं शुश्रूषवेऽनघ ।

**सूतः (उवाच)**

जैगीषव्य वचः श्रुत्वा मयूरवरवाहनः ।।५ ।।

जगाद मनसा देवौ नत्वा हृष्टतनूरुहः ।
जैगीषव्याय मुनये विनयोदारसंयुतम् ।। ६ ।।

माधुर्यगुणसंयुक्तं चक्षूरसविजृम्भितम् ।

**स्कन्दः (उवाच)**

मणिद्वीपे सुधासिन्धोर्मध्येऽमितमणिप्रभे ।। ७ ।।

मणिप्राकार पर्यन्तकल्पवृक्षौघशोभिते ।
नीपवाटीसमाक्रान्त चिन्तामणिविराजिते ।। ८ ।।

महासौधमहाश्रृङ्गमहाद्युतिविराजिते ।
दिव्यचिन्तामणिगृहे कल्पवाटीपरीवृते ।। ९ ।।

चिन्तामणिगणज्योतिस्तिरस्कृतदिवाकरे ।
तस्मिन्नालम्बिरत्नौघश्रृङ्खलाबद्धमञ्चके ।। १० ।।

हरिब्रह्ममहेशेशसदाशिववरार्चिते ।
पादप्रपीठभूतेषु सृष्टिस्थित्यन्तकारिषु ।। ११ ।।

तस्मिन्विहारशयने कामकामेश्वराकृती ।
चिक्रीडतुश्चिरं कालं देवौ रससटे मुने ।। १२ ।।

तदा सम्प्रार्थयामास देवी देवं महेश्वरम् ।
प्रणयात्प्राञ्जलिर्देवी भगवन्तं महेश्वरम् ।। १३ ।।

**देवी (उवाच)**

ममात्यन्ततपोद्भूतमहानन्दरसेन च ।
अनन्तजगदुत्पत्तिसंहारस्थितितोषकृत् ।। १४ ।।

हृदयेन तवेशान निर्मितो द्वीप उत्तमः ।
सुधासिन्धुतरङ्गौघमणि भागैकसुन्दरः ।। १५ ।।

तत्र चिन्तामणिकृतसौधमध्यस्थमञ्चगः ।
वस मा गच्छ कैलासमत्र मे रमते मनः ।। १६ ।।

यादृश्यत्र मम प्रीतिस्तादृशी च न कुत्रचित् ।
ममान्तरात्मा भगवान्मम प्राणशिरोमणिः ।। १७ ।।

विज्ञप्तं यन्मया शम्भो तत्स्वीकुरु कृपानिधे ।
तदुदारतरां वाणीं समाकर्ण्याह तां शिवाम् ।। १८ ।।

**ईश्वरः (उवाच)**

ममेष्टवासः सुभगे कैलासो गीयते सुरैः ।
शम्भुः कैलाससदन इति रूढिर्महेश्वरि ।। १९ ।।

अत्र त्वं च मया सार्धं विहरस्व [1]मया सह ।
सुधासागरमध्यस्थमणिद्वीपे मनोहरे ।। २० ।।

कल्पवृक्षमहावाटिनीपौघद्विपिनः[2]कुले ।
यथा त्वयि मम प्रीतिस्तथा द्वीपे महेश्वरि ।। २१ ।।

अस्मिन्नेव वसामीति ममापि नियतं मनः ।
एकोऽप्यहमनेकात्मा नानाकारो महेश्वरि ।। २२ ।।

यथा सूर्यः पुरे राष्ट्रे द्वीपे लोकेष्वपीश्वरि ।
एक एव हि तत्रत्यैर्दृश्यते स्वगृहोदितः ।। २३ ।।

तथाहं सर्वभूतेषु सर्वान्तर्वास एव हि ।
अत्राहं वै त्वया देवि कामेश्वरसमाह्वयः ।। २४ ।।

---

1. मया सार्धं, मया सहेति समानार्थे पौनरुक्त्यं दृश्यते ।
   विहर स्वेच्छया शिवे इति कथनं सङ्गच्छते ।।

2. नीपौघविपिनाकुले इति ।।

त्वं च कामेश्वरी देवी नानारूपाणि कल्पय ।
इत्युक्ता सा जगन्माता शिवस्यानुमतं शिवम् ।। २५ ।।

चकाररूपं कामेश्यास्त्रिपुराख्या महेश्वरी ।
तया तत्र मणिद्वीपे नित्याभिः परिषेविता ।। २६ ।।

कामेशावस्थिता देवी कामेशपरमेश्वरे ।
रमयामास विविधैः भोगजालरसैः शिवा ।। २७ ।।

पुनः कतिपये काले शङ्करौ लोकसुन्दरौ ।
वृषभं तं समारुह्य कैलासमभिजग्मतुः ।। २८ ।।

नन्दिभृङ्गि गणौधैश्च देवेभगणपेन च ।
नानावाद्यमहारावबधिरीकृतदिङ्मुखः ।। २९ ।।

कैलासमौलिरत्नौघसदने परमेश्वरः ।
पर्वतेन्द्रेऽगजायुक्तो गणयुक्तः परं सुखम् ।। ३० ।।

नानाहारविहारश्च कोटिकन्दर्पसुन्दरः ।। ३१ ।।

सुधासागरोद्यन्मणिद्वीपमध्ये
महाकल्पवातोद्यतापारवाटी ।
महानीपजालान्तरोद्यत्प्रभाभिः
मनोज्ञेऽयुतादित्यदिव्यप्रभाढ्ये ।। ३२ ।।

सुचिन्तामणीक्लृप्तसौधान्तरोद्य-
न्महामञ्चके कामरूपो महेशः ।

तथा मे जनित्र्या सदास्ते सहर्षो
जगज्जालसंहारसंस्थास्थितिज्ञः ।। ३३ ।।

नगाग्रेऽद्य कैलासमौलौ महान्ते
निषण्णः सदा विश्वलीलो महेशः ।
सदैवाम्बया चित्रशक्तिर्महेशो
ह्यनन्तानि धामानि चित्राणि तस्य ।। ३४ ।।

न जानन्ति वेदा न जानन्ति देवा-
स्तदाकाररूपं न कोऽपीशरूपम् ।
किमेतत्तदापारनीरूपमेकं
परं निर्गुणं किन्तु लभ्यं प्रसादात् ।। ३५ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे कैलासगमनं नाम सप्तदशोऽध्यायः ।।
।। शिवार्पणम् ।।



## ।। अष्टादशोऽध्यायः ।।

**स्कन्द उवाच**

एकदाद्रीन्द्रमालोक्य मेना हृष्टतनूरुहा ।
उमां संस्मृत्य निःश्वस्य प्रोवाचेत्थं पतिव्रता ।। १ ।।

**मेनोवाच**

आर्यपुत्र न जानामि प्रवृत्तिमपि किञ्चन ।
विवाहसमयार्दूर्ध्वं तस्या गौर्या गिरीश्वर ।। २ ।।

प्रवृत्तिमपि नो देव्या जानेऽहं तेन दुःखिता ।
स वृषेन्द्रगतिर्देवो भस्मोरगविभूषणः ।। ३ ।।

महापितृवनावासो दिग्वासाः क्वास्ति सम्प्रति ।
अष्टौ या मातरो दृष्टा ब्राह्मीप्रभृतयश्च याः ।। ४ ।।

दुःखस्वरूपा मन्येऽहं बालिकाः कष्टहेतवः ।
तस्यैकस्य न कोऽप्यन्य एको रुद्रः श्रुतीरितः ।। ५ ।।

तदुदन्तप्रवृत्त्यै च क्रियतामुद्यमो विभो ।
तस्याः प्रियाया वाक्येन तदपत्यप्रियो गिरिः ।। ६ ।।

उवाच वचनं शास्त्रं उमावात्सल्यसन्नधीः ।

**गिरिः (उवाच)**

मैवं वदाद्य मेने त्वं दुःखाधिक्यं महेश्वरे ।। ७ ।।

मत्सुता सा शिवा देवी त्रैलोक्यजननी शिवा ।
कन्या ते कारणाज्जाता शिवस्यार्धाङ्गभागिनी ।। ८ ।।

यस्याः कटाक्षमात्रेण सर्वेषां सर्वसिद्धयः ।
लभ्यन्ते च महेशान्याः सा किं दुःखाधिका भवेत् ।। ९ ।।

सुखैकवसतिः शम्भुः शङ्करः शाश्वतोऽव्ययः ।
तत्स्वरूपपरिज्ञानं वेदैरपि न शक्यते ।। १० ।।

यस्य लिङ्गार्चनेनैव मोक्षभाग्यमदूरगम् ।
यस्यार्चनेन देवानां देवत्वं किल भामिनि ।। ११ ।।

यस्यैकवसतिर्मेने कैलासो रजताचलः ।
धनुर्यस्य महामेरुः सर्वदेवालयो महान् ।। १२ ।।

यस्य बाणो हरिः साक्षाद्यस्याश्वाः श्रुतयोऽखिलाः ।
रथो धरित्री देवस्य अहिराडथ शिञ्जिनी ।। १३ ।।

स्रष्टा यस्य किलेदानीं सारथी रथवाहने ।
चन्द्रसूर्यौ तथा चक्रे तस्य देवस्य धूर्जटेः ।। १४ ।।

ख्यातो देवेषु देवेशः सुधन्वा स इषुर्हरिः ।
हरिकेशश्चभगवान्नथाश्वपतिरीश्वरः ।। १५ ।।

विष्णुब्रह्ममहेन्द्रादिलोकोत्थायाः श्रियः प्रिये ।
तस्य कैलासकोट्यंश कोट्यंशेनापि नो समाः ।। १६ ।।

तद्दर्शनार्थं च गन्तुं वृत्तं मम मनः प्रिये ।
अहमेव गमिष्यामि तस्या मेने गवेषणे ।। १७ ।।

गवां पतेर्महेशस्य कैलासनिलयस्य च ।
नितरां बाधते प्रेम तददृष्टा(ष्ट्या)ग्निदूषणम् ।। १८ ।।

यदा प्रभृति सा देवी निर्गता मम सद्मतः ।
मन्ये मेने तदारभ्य पद्मसद्मापि निर्ययौ ।। १९ ।।

तदालापादयो मेने श्रोत्रे शब्दग्रहे प्रियौ ।
प्राणेश्वरि तदारभ्य स्यातां शब्दग्रहान्तरौ ।। २० ।।

जैवातृकी यतोऽह्नः स्याद्दूरीभूता दृशोर्मम ।
प्रिये जैवातृकी ज्योत्स्ना ततोऽह्नोऽपि दुनोति माम् ।। २१

यदपत्यप्रमादेन देवदेव्योः पदाम्बुजम् ।
धन्यः पश्यामि नेत्राभ्यां चिराय चिरपापहृत् ।। २२ ।।

दृष्ट्वा शिवौ शिवं मे स्यादित्यमन्यत गिरीश्वरः ।
मेने धन्ये ह्यद्यकन्यादर्शनेनाद्य धन्यताम् ।। २३ ।।

मन्येऽतिनितरां शम्भोः कैलासारोहणेन तु ।

**हिमवान् (उवाच)**

मैनाक नय रत्नानि वासांसि विविधानि च ।। २४ ।।

वृत्तमुक्ताफलानां तु कोटिद्वयपरीमितम् ।
तथा दारितरागाणां हीरकाणां तुलाशतम् ।। २५ ।।

नवलक्षाधिकं विप्रषडस्त्राणां सुतेजसाम् ।
लक्षद्वयं विडूराणां तुला विमलवर्चसाम् ।। २६ ।।

कोटीश्च पद्मरागाणां पञ्चावैहि तुला मुने ।
पुष्परागतुला पञ्चकोटिं च गुणितस्तथा ।। २७ ।।

तथा गोमेदरत्नानां तुलालक्षमितं मुने ।
इन्द्रनीलमणीनां तु कोटिद्वियमितं तथा ।। २८ ।।

गरुडोद्गारिरत्नानां तुलाः प्रयुत संमिताः ।
शुद्धविद्रुमरत्नानां तुलाश्चैव तु कोटयः ।। २९ ।।

अष्टाङ्गाभरणानां च सङ्ख्यां कर्तुं न शक्यते ।
मकुटाङ्गदकेयूर चूडामणिशिखण्डकाः ।। ३० ।।

कर्पूरा नागबन्धा(द्धा)श्च वङ्किकाङ्गुलिकादयः ।
वेणीमण्डलसम्भ्राजि रत्नपुष्पगणास्तथा ।। ३१ ।।

मणिहस्तसराश्चैव हीराङ्गुष्ठाग्रवेष्टनाः ।
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलीसरैः ।। ३२ ।।

रत्नाच्छपदकानां च सरावलिमणिप्रभैः ।
रत्नताटङ्कवलयैर्नासावाहैश्च मौक्तिकै ।। ३३ ।।

रत्नकाञ्च्योऽद्य घण्टाढ्यमुक्तागुच्छैकलम्बिताः ।
रत्नमञ्जीरपादाङ्घ्रिकटका रत्नश्रृङ्खलाः ।। ३४ ।।

कुण्डलीभोगवस्त्राभा रणत्कटकपाडकाः ।
नखाङ्गुलैर्वैष्टनकैर्मुक्तालोलैः स्रवत्सरैः ।। ३५ ।।

वाससां च विचित्राणां नानावर्णाम्बरावृताम्[1] ।
पद्मरागसवर्णानां सोमधामैकवर्चसाम् ।। ३६ ।।

बालातपप्रभाणां च नीलमाञ्जिष्ठवर्चसाम् ।
हंसपाळीगजाकारसिह्मप्रान्तोरुशोभिताम् ।। ३७ ।।

---

1. वर्णावृतात्मनाम् ।

सुवर्णपथसङ्क्लृप्तवाससां राशयस्तथा ।
कर्बुराणां च पीतानां हरिन्मणिनिभात्मनाम् ।। ३८ ।।

कृमिसूत्रोत्थजाद्युद्यद्वासोराशिभरैरपि ।
निचोलैर्विविधैस्तत्र मुक्ताप्रान्तोरुशोभितैः ।। ३९ ।।

दुकूलकूल(ट)विलसन्मणिमौक्तिकजालकैः ।
निचितस्वर्णवस्त्राणां भारकाणां शतत्रयम् ।। ४० ।।

गन्धगन्धायितानां च कङ्कतादर्शभारकैः ।
अञ्जनारोचनानां च कर्पूरपटवाससाम् ।। ४१ ।।

पाटीरचन्द्रकस्तूरीगन्धैर्मलयजैस्तथा ।
तगरागरुतक्कोल जाजीपत्रफलैरपि ।। ४२ ।।

लवङ्गकैलासुमधुरसर्जनैश्च मनः शिलाः ।
सिन्दूरालक्तक निशाकुङ्कुमैः कङ्कणैस्तथा ।। ४३ ।।

क्रमुकाणां राशयश्च स्वच्छनागकपत्रकैः ।
मुक्ताचूर्णरजात्युच्च चन्दनैर्धूपवर्तिभिः ।। ४४ ।।

स्वमौलिचन्दनानां च पालिकालिभरैरपि ।
रत्नकन्दुकहल्लीसदण्डैश्चैवाथ पालिकाः ।। ४५ ।।

दिव्यवृक्षफलैश्चैव रत्नवीटीगणैरपि ।
वराटिकाकोटिभिश्च मुक्ताशुक्तिकरण्डकैः ।। ४६ ।।

छत्रव्यजनजापार चामरापारदर्पणैः ।
फलमूलभराणां च तथा सुमनसां भरैः ।। ४७ ।।

पार्वतीयैश्च पुरुषैरुह्यमानैश्च सङ्घशः ।
शकटीनां कुलभरैः पूरितै रत्नवाससाम् ।। ४८ ।।

सुवर्णकोट्यो दृप्ताङ्ग्यो दास्यो दासाश्च कोटिशः ।
सर्वाण्यपि समादाय प्रतस्थे भूधरेश्वरः ।। ४९ ।।

ययौ कैलासमीशस्य मध्ये दृष्टो महामुनिः ।
दुर्वासास्तपसां श्रेष्ठस्तपोयुक्तो जटाधरः ।। ५० ।।

भस्मरुद्राक्षसंवीतो वृतो मुनिगणैरपि ।
रुद्रावर्तनशीलैश्च शिवलिङ्गार्चकैस्तथा ।। ५१ ।।

बिल्वपत्रैस्त्रिकालं च पञ्चाक्षरपरायणैः ।
तं दृष्ट्वा प्रणनामाथ मेनया हिमभूधरः ।। ५२ ।।

मैनाकेन नगश्रेष्ठो गन्तुं समुपचक्रमे ।
तमाह विनयानम्रं हिमवन्तं महागिरिम् ।। ५३ ।।

**दुर्वासाः (उवाच)**

कुत्र वा गम्यते शैल मैनाकेन च मेनया ।
तद्द्रुतं सम्यगाचक्ष्व यदि श्राव्यं नगोत्तम ।। ५४ ।।

तद्दुर्वासवचः श्रुत्वा प्राञ्जलिर्विनयान्नगः ।
प्रोवाच तं महात्मानं दुर्वाससमकल्मषम् ।। ५५ ।।

**हिमवान् (आह)**

मेनया दर्शनेच्छातो बहुकालीनया मम ।
देवीमुखाम्बुजं द्रष्टुं गच्छामि स्नेहयन्त्रितः ।। ५६ ।।

अजापि सा महादेवी मत्तो जातेति मे स्पृहा (मतिः) ।
कैलासे शङ्करं द्रष्टुमुपबर्हणसत्करः ।। ५७ ।।

शिवपादाम्बुजद्वन्द्वदर्शनार्थं महामुने ।
हिमवद्वचनं श्रुत्वा मुनिः प्राह तदा मुदा ।। ५८ ।।

**दुर्वासाः (प्राह)**

गच्छस्वारिष्टपन्थानं मा ते कार्यस्य विघ्नता ।
दृष्ट्वा देवं महादेवं तन्मौलौ संस्थितं हि माम् ।। ५९ ।।

तपस्यन्तं च केदारे मुनिभिर्ज्ञापयेश्वरम् ।
केदारेश्वरलिङ्गस्य वरिवस्यापरं सदा ।। ६० ।।

शिवाज्ञया महादेवी त्वयाप्यत्रागमिष्यति ।
तां प्रसाद्य तपः पारं गन्तुमिच्छामि भूधर ।। ६१ ।।

इत्युक्तो मुनिना भूभृन्नत्वागाच्छाङ्करं नगम् ।
मैनाकेन च संहृष्टो मेनयानुययो(गतो)द्रुतम् ।। ६२ ।।

**स्कन्दः (उवाच)**

श्वशुरं शशिशेखरस्य देव्याः
पितरं ज्येष्ठकुलाचलेषु धुर्यम् ।
वयसा[1] शिरसा ननाम पादौ
हिमभूमेः[2] स तदा महेशशैलः ।। ६३ ।।

---

1. वचसेति युज्यते ।

2. हिभूधृत्स तदा ।। अथवा हिममयी भूमिः यस्येत्यर्थे हिमभूमिरिति ।।

मैनाकेन च मेनया हिमगिरिः कैलासमौलिस्थितं
तत्रागादगजापतिं सुमनसां भारैश्च रत्नार्हणैः ।
स्वस्यापारशिरोरुसन्निभफलैः पूष्पार्हणैरद्रिराट्
आयातोपचितिप्रधानपरमानन्देन द्रष्टुं शिवौ ।। ६४ ।.

कलधौतनगः कलासुदक्षः
शशलक्ष्माङ्ककलाधरोरुमौलेः ।
कुलभूभृत्तिलकं प्रणम्य हर्षा-
च्छ्रयणेनापि शिवस्य वाचमूचे ।। ६५ ।।

**कैलास उवाच**

भवतो भवदङ्गसङ्गताया
अभवद्दर्शनमद्य शैलमौले ।
भवनाशो हि भवप्राणामतो
भगिनी चास्य गिरेरहो भवानी ।। ६६ ।।

भवतो विपिनावनीतपोद्य-
त्तपसो राशिमुनीषु देवसङ्घे ।
वनजालेषु नगेश्वरोरुमौलौ
कुशलं किन्नु तवाण्डजे मृगेषु ।। ६७ ।।

अगमा वयमेव लोकजाले
सुगमा अप्यति शङ्करस्य भक्ताः ।
निगमागमसंस्तुतस्य पादा-
श्रयणेनानुगता सदा नगेश ।। ६८ ।।

**सूत उवाच -**

इति नगतिलकस्य वाक्यजालं
मधुरोदारतरं निशम्य हर्षात् ।
कलधौतनगस्य धूतपापै-
र्वचनैनन्दितहृद्‌गुहोऽभ्युवाच ।। ६९ ।।

**हिमवान् (उवाच)**

तव मौलिकुलेषु तुङ्गलिङ्ग-
प्रथितापारशिवालयोज्वलद्‌भाः ।
भवतापशमाय केवलं
भव पादाम्बुजसंश्रयाद्विशिष्टः ।। ७० ।।

तव मौलिवनस्पतिप्रभावे
तवमौल्यण्डजसन्मृगे नगाद्य ।
कुशलं किमु चित्रमेतदेव शम्भोः
पदभक्तेषु न वा किमस्त्यलभ्यम् ।। ७१ ।।

इत्यालिङ्ग्य नगोत्तमौ सरसया वाचा प्रसन्नाननौ
जातानन्दभरौ महेश्वरपदाम्भोजेतु रक्तान्तरौ ।
यातौ देववरमुमापतिमथो तौ मेनया प्रस्नुता-
पारस्तन्यसरीभरीरसवरैः शैलेन्द्रकन्येक्षणात् ।। ७२ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे कैलासहिमालयसङ्गमो नाम
अष्टादशोऽध्यायः ।।
।। शिवार्पणम् ।।

## ।। एकोनविंशोऽध्यायः ।।

**स्कन्दः (उवाच)**

आराद्दृष्ट्वा तदा विप्र हिमवान्हेमभूषितम् ।
विमानं तदनु प्राप्य स्वमौलौ स्थातुमद्रिराट् ।। १ ।।

मेनया रत्नभारैश्च दुकूलवरभारकैः ।
मैनाकेनाथ सव्ये तु दत्तहस्तो नगाधिपः ।। २ ।।

दक्षे त्र्यक्षमहाशैलकैलासाचलपाणिना ।
दत्तहस्तो नगाधीशस्तं ददर्श नगोत्तमम् ।। ३ ।।

विस्मयाक्रान्तहृदयो मेनां वीक्ष्य तदाब्रवीत् ।

**हिमवान् (उवाच)**

धन्ये मन्येऽद्य नयने मेनेऽद्यैव[1] मनोरथम् ।। ४ ।।

चिराय दृष्टः कैलासो नानाशृङ्गविराजितः ।
यत्र सन्त्युरुरत्नोत्थगर्भधामगतानि च ।। ५ ।।

उत्कृष्टशिवलिङ्गानि सोमधामोज्ज्वलानि च ।
तल्लिङ्गगर्भधामोद्यद्दृश्यकुम्भावलीमपि ।। ६ ।।

दूराद्द्रष्टुं पुण्यतमं यत्र कुत्र शिवालयम् ।
तत्सप्तजन्मपापानां विनाशकमपि प्रिये ।। ७ ।।

कैलासमौलिजापारशिवागारोरुशेखरः ।
जन्मिनां पापराशीनां प्रवेशः कुत्र वा प्रिये ।। ८ ।।

---

1. पूर्णो मनोरथः ।

पश्य गोपुरजालानि वृषकुम्भोज्ज्वलानि च ।
तद्गोपुरमहाकुम्भबिम्बा इव नभोङ्गणे ।। ९ ।।

चन्द्रसूर्यौ तथा तारा बिम्बिता इव संस्थिताः ।
ग्रहाः सप्तर्षयश्चेमे ध्रुवोऽयं पश्य मत्प्रिये ।। १० ।।

सौधपङ्क्तिमिमां पश्य मणिजालैः प्रकल्पिताम् ।
सर्वावासोऽपि भगवान्त्सौधेष्वत्यन्तहर्षितः ।। ११ ।।

मन्ये त्वत्कन्यया मेने विहरत्येव निश्चितम् ।
राजतो राजते धन्यो मान्यो मन्युसमागमात् ।। १२ ।।

बालोऽप्यबालचरितः कैलासस्त्वेषभूधरः ।
पुत्रात्प्रियतरो[1] मेऽद्य मेनाकेनद्य निश्चितम् ।। १३ ।।

यस्मिन् कैलासभूभागे ब्रह्मविष्ण्वादिकाङ्क्षिते ।
तपसा नैव सम्प्राप्यो दुर्दर्शो योगिनामपि ।। १४ ।।

कैलासदर्शनार्थाय तपस्यन्ति तपःप्रिये ।
अद्यापि ब्रह्मविष्ण्वाद्या मुनयो गुणसत्तमाः ।। १५ ।।

सोऽयं सम्बद्धसम्बद्धगौर्या गुरुतयाप्रिये ।
स्नेहधारानुवशतो ह्यगम्यः सुगमोऽभवत् ।। १६ ।।

नैव देवादिलोकेषु न वैकुण्ठे न सत्यके ।
भूरादिसर्वलोकेषु नास्त्यस्य तुलना क्वचित् ।। १७ ।।

---

1. अस्माभिः सह कैलासगिरिवरसौन्दर्यातिशयं पश्यता मैनाकेनास्मत्तनयेन अवश्यं एवं निश्चितं भवेत् "यदंयं गिरिवरः मज्जनकस्य हिमवतः पुत्रादपि प्रियतरो जात' इति ।

स्वयमीशेन मनसा कल्पितोऽयं महीधरः ।
विश्वं विश्वसृजाक्लृप्तमेतद्वननदीनगम् ।। १८ ।।

कालेन शीर्णतां याति कारणात्कार्यमप्यनु ।
अनुमीयेत हे बाले नश्वरात्स्थिरता कथम् ।। १९ ।।

किन्तु मृत्युञ्जयेनाद्य विश्वाधिक्येन कल्पितः ।
गिरीशेन गिरीशोऽयं पश्य नेत्रेण भामिनि ।। २० ।।

कलधौतमहाशैलो धूतपापोऽयमद्रिराट् ।
एतन्मौलिशिखासारवायुपोतैककाङ्क्षिणः ।। २१ ।।

विष्णुब्रह्मादयो देवा मुनयो मानवाः प्रिये ।
वातोऽपि संहरत्येष पापतापविशेषतः ।। २२ ।।

किं तु दृष्टोऽयमधुना हीष्टोऽयं चाष्टदेहिनः ।
वयं विशिष्टाः सर्वेषु धन्या मान्याश्च भूभृताम् ।। २३ ।।

सुराणां च मुनीनां च गणानां किल सत्तमे ।
हृत्तमोनाशकः शैलस्त्वन्ये दृक्तमनाशकाः ।। २४ ।।

एतस्य दर्शनादेव प्राप्तकामोऽस्मि साम्प्रतम् ।
इत्युक्त्वा तं महाशैलमारुरोह महागिरिः ।। २५ ।।

अपश्यच्चालयन्दृष्टिं सर्वतः शैलमूर्धसु ।
नानासौधैकवसति गोरुरालिवरार्जितम्[1] ।। २६ ।।

रत्नप्राकारवृषभैः शोभितं च शिवालयैः ।
रत्नकुम्भोत्थधाराभिर्विचुम्बितमिवाम्बरम् ।। २७ ।।

---

1. विराजितम् ।

गणसौधगणानां च स्कन्दहेरम्बसौधकैः ।
तद्‌गणानां प्रभाभिश्च ततमत्यन्तसुन्दरम् ।। २८ ।।

राजानं पर्वतेन्द्राणां वनसानुविभूषितम् ।
कुलाचलैश्च परितो मूर्तिमद्‌भिरुपासितम् ।। २९ ।।

उत्फुल्लकमलोदारसरसीभिर्मनोहरम् ।
नानावृक्षसुमोद्‌भूतगन्धबन्ध विराजितम् ।। ३० ।।

नानामृगगणानां च कोटिभिः परितोवृतम् ।
मन्दमारुतसञ्चारपुलिनायितदिक्तटम् ।। ३१ ।।

नानारत्नमणीक्लृप्तमण्टपावलिशोभितम् ।
गङ्‌गाभिः पञ्चभिस्तत्र शोभितं लिङ्‌गसङ्‌घकैः ।। ३२ ।।

मन्दं मन्दं ययौ पश्यन्गिरिराट् तं गिरीश्वरम् ।
स्नात्वा स देवगङ्‌गायां कैलासामलपर्वते ।। ३३ ।।

कृत्वा चावश्यकं कर्म मेनया सोऽप्यमन्यत ।
धन्यतां स स्वजनुषः साफल्यमगजेश्वरः ।। ३४ ।।

तमागतं तदा ज्ञात्वा निषधाद्या महीधराः ।
समागताः प्रणम्यैनं प्रालेयाचलपर्वतम् ।। ३५ ।।

मेनां मैनाकमालिङ्‌ग्य कुशलं तेऽप्यवोचिरे ।

**गिरयः**

धन्या मान्या वयं सर्वे कैलासे निवसामहे ।। ३६ ।।

---

1. अग-जा-ईश्वर इत्यतो लघुतया अगनायक इति कथनं युक्तं भाति ।।

शशिमौलेः प्रसादेन वयं त्वद्दर्शनेन च ।
चिरकालेनेह साह्यं[1] जातमद्रीश्वराधुना ।। ३७ ।।

गौरी[2]गुरोर्दर्शनेन सफलो नो मनोरथः ।
गुरुर्मेना जनित्री नो भवान्गुरुतरो हि नः ।। ३८ ।।

एह्यस्माकं गृहाञ्छैल कदा वा तव दर्शनम् ।
इत्युक्तश्चाद्रिभिः शैलस्तानालिङ्ग्यानुमान्य च ।। ३९ ।।

तानाह गिरिराजोऽयं गिरीन्पुत्रानिवौरसान् ।

**हिमवान् (उवाच)**

भवतां स्वस्ति वो(भो)वत्सा भवपादैकवर्तिनाम् ।। ४० ।।

त्रिणेत्रमान्या यूयं हि किं चित्रं स्वस्तयेऽस्तु वः ।
भवन्मौलिषु विश्वात्मा भवो भवरुजां हरः ।। ४१ ।।

विहरत्येव नियतं भवन्मौलिस्थसौधके ।
इत्युक्त्वा स गिरिर्गत्वा गिरीणामाश्रमेषु च ।। ४२ ।।

प्रत्येकं गिरिभिस्तत्र पूजितो भोजनार्हणैः ।
मेनया गिरिराट् तत्र मैनाकेन च संयुतः ।। ४३ ।।

उवास मुदितोऽत्यर्थं कैलासेन मुदा युतः ।
कैलासोऽप्येनमामन्त्र्य भोजनेनार्हणेन च ।। ४४ ।।

स्रग्गन्धसुमवासोभिर्मेनया तं नगेश्वरम् ।
हिमवन्तं गणवरैः श्रुत्वा चागतमीश्वरः ।। ४५ ।।

---

1. साह्यं - Union.     2. हिमवतो (भवतः) दर्शनेन

स्कन्दहेरम्बनन्द्यादीन् आहूयाप्रेषयत्तदा[1] ।
तं मानयितुमीशानो मैनाकेन च मेनया ।। ४६ ।।

शिवाज्ञां ते तदा श्रुत्वा नन्दिस्कन्दगणेश्वराः ।
विमानेनार्कवर्णेन गणवृन्दैः समागताः ।। ४७ ।।

दृष्ट्वा नगेश्वरं तत्र कैलासस्य गृहोषितम् ।
मैनाकेन च पत्न्या च पार्वतीयैर्गणैर्वृतम् ।। ४८ ।।

विमानादवरुह्यैवं नन्दिस्कन्दगणेश्वराः ।
प्रणेमुस्तं शैलाराजं गौरीगुरुमतन्द्रिताः ।। ४९ ।।

मेनां नत्वा च मैनाकं समालिङ्ग्य मुदा तदा ।
सोऽपि प्रालेयशैलेन्द्रो दृष्ट्वा पौत्रौ[2] मुदा युतः ।। ५० ।।

नन्दिनं तौ च शैलेन्द्रो मूर्ध्न्यजिघ्रन्मुदा द्विजाः ।
मेनापि पौत्रावालिङ्ग्य पुत्रीपुत्राननेक्षणा ।। ५१ ।।

जातहर्षा च पुलकैश्चिरं बाष्पाण्यवर्तयत् ।
स्वासनेषूपविष्टास्ते कैलासेनानुमोदिताः ।। ५२ ।।

गिरिः प्राह तदा पुत्रीपुत्रौ तं नन्दिनं मुदा ।

**हिंमवान्**

वत्सौ भवन्तौ बहुना कालेनालोकयाम्यहम् ।। ५३ ।।

---

1. उपसर्गात्पूर्वमागमस्याविहितत्वात् प्रैषयत्तदेति पाठो युक्तः ।

2. वस्तुतः हिमवान् न गौर्या जनकः । तेन शैलाधिराजेन हिमवता पार्वती पुत्रीनिर्विशेषं संवर्धिता, शिवाय पत्नीत्वेन च दत्ता, स्कन्द-गणेशयोः गौरीमहेशपुत्रत्वमपि न वास्तविकभेव । पुराणोक्तकाल्पनिक-सम्बन्धमवलम्ब्यापि तयोः पौत्रत्वकथनं न सङ्गच्छते । तयोः पुत्रस्य पुत्रत्वाभावात् ।।

संस्त्रयं नन्दिनं पुत्रं द्रष्टुमागां च मातरम् ।
(सखायं नन्दिनं पुत्रं दृष्टुमागां च मातरम् ।)
भवन्तौ पुत्रकौ युक्तो मातामह्यानुचोदितः ।। ५४ ।।

चिरं सन्दर्शनानन्दसञ्जातपुलकोद्गमः ।
पश्यामि तं महादेवं गौरीं हृदयनन्दिनीम् ।। ५५ ।।

मातामहेन शैलेन इत्युक्तास्ते कुमारकाः ।
सर्वे प्राञ्जलयः शैलमनुमान्याभ्यवोचिरे ।। ५६ ।।

**स्कन्दाद्या ऊचुः**

किं चित्रं भवतः शैलगुरो गुरुतरो भवान् ।
पश्य देवं महादेवं गौरीं तव तनूभवाम् ।। ५७ ।।

महेशेन महाशैल प्रेषिता दर्शनाय ते ।
मेनया सहनिर्याहि मैनाकेनामुना मुदा ।। ५८ ।।

अचिरेण दृशा पश्य देवीं तं चन्द्रभूषणम् ।
इति सर्वे समालिङ्ग्य गिरयो गणपुङ्गवाः ।। ५९ ।।

स्कन्दहेरम्बकाश्चैव मैनाकेन च मेनया ।
विमानं तत्समारुह्य कैलासेन महाद्रिराट् ।। ६० ।।

ययौ कैलासमौलीषु पश्यन्विश्वेशितुः श्रियम् ।
सौधमालां च तत्रत्यां मणिप्रवरकल्पिताम् ।। ६१ ।।

मेनामुवाच प्रसभं प्रालेयाचल उत्तमः ।

**गिरिः (उवाच)**

जामातुस्ते श्रियं पश्य विष्णुब्रह्मादिदुर्लभाम् ।। ६२ ।।

पदवीमदवीयो यो मनसाणीयसा किमु ।
कल्पितुं शक्यते देवि मा दुःखविवशा भव ।। ६३ ।।

तद्गिरेर्वचनं श्रुत्वा दृष्ट्वा पौत्रौ च तां श्रियम् ।
उवाच गिरिराजानं मेना नम्रशिरोधरा ।। ६४ ।।

**मेना (उवाच)**

स्त्रिया मया कृता बुद्धिरन्यथैव महेश्वरे ।
नो चेन्महेश्वरत्वं स्यात्कथं देवे त्रिलोचने ।। ६५ ।।

सञ्जातविस्मया मेना मेने सर्वमनोरथम् ।
पूर्णं शिवप्रसादेन गौर्याः सन्दर्शनेन च ।। ६६ ।।

**स्कन्दः (उवाच)**

मैनाकेन च मेनया शिवपदद्वन्द्वार्चनायाधिकं
स्वोद्यन्मौलिगतैः फलैः सुमधुरैर्मूलैश्च बिल्वीभरैः ।
रत्नोद्वाहगणैर्मुदा गिरिवरो वीक्षन्ययौ तां श्रियं
उत्फुल्लामलवक्त्रपङ्कजलसन् द्रष्टुं महेशं शिवाम् ।।

प्रालेयप्रवराचलो गिरिवरैर्युक्तोऽविमुक्तं पदं
प्राप्तुं शङ्करदिव्यधामवरगप्रासादमत्युज्ज्वलम् ।
कैलासाचलदत्तहस्तवरको ज्येष्ठो गिरिर्विस्मयन्
स्वेनानीतमपाररत्नभरकैः किं देयमत्यादरात् ।। ६८ ।।

पयोदधिपयः कणैः कथमिहास्ति चार्घ्यं मुदे
प्रचण्डतररश्मिभिः किमु तदीयदानेन मे ।
इतीव मतसा स्मयन्गिरिवरस्तदोत्तीर्य वै
जगाम भवनं विभोर्गुरुभरादिरत्नोद्वहैः ।। ६९ ।।

सोऽप्यद्रीश्वरमागतं गिरिजया श्रुत्वैव नन्दीमुखा-
त्तेनानीतविचित्ररत्ननिवहं देव्यै ददौ शङ्करः ।
तं चालिङ्ग्य मुदा तदा त्रिजगतां नाथोऽपि गौरीगुरुं
प्रेम्णा हेमवितानचित्रितमहासिह्मासने विश्य तम् ।। ७०

मैनाकेन च मेनया गिरिवरं सम्पूज्य चालिङ्ग्य तान्
प्राह स्वस्तिवचोऽप्युदारमनसा तं चाद्रिपं चेश्वरः ।
तत्पुष्पप्रकरं फलोद्यतकुलं प्रीत्यानुमान्यादरात्
भक्त्याभ्यर्च्य गिरिव्रजं सुमधुरैर्भक्ष्यैश्च भोज्यैरपि ।। ७१

सम्भोज्य स्वसुतैर्मुदा गणवरैः प्रालेयशैलानुगै-
र्मैनाकेन गिरिश्वरैर्गिरिजया ताम्बूलपुष्पार्हणैः ।
वासोरत्नविभूषणैर्मणिगणैर्धूपैश्च दीपोत्सवै
रुद्राणीगणनर्तनैश्च भगवानम्बायुतो मोदितः ।। ७२

।। इति श्रीशिवरहस्ये द्वितीयांशे हिमाचलेश्वरसमागमो नाम
एकोनविंशोऽध्यायः ।।
।। शिव शिव ।।



## ।। विंशोऽध्यायः ।।

**सूत उवाच**

ततोऽन्तः पुरमागत्य सा मेना सोऽद्रिराट् तदा ।
प्रणतां प्राञ्जलिं गौरीं मैवमित्यब्रवीदुमाम् ।। १ ।।

**हिमवान्**

गौरि त्वां द्रष्टुमिच्छातः समागच्छमिहाम्बिके ।
मेनया त्वामथात्रागां एनां करुणया गिरा[1] ।। २ ।।

पश्य स्नेहेन देवेशि त्वदालोकनहर्षिताः (म्) ।
इत्युक्ता सा च गिरिजा पितृवाक्यप्रहर्षिता ।। ३ ।।

मातरं तां समालिङ्ग्य मेनां हर्षेण भाविताम् ।
मेनापि तां समालिङ्ग्य गौरीं स्नेहविलोचनैः ।। ४ ।।

अपश्यत्प्रस्नुतपयःपूरैरस्नापयच्च ताम् ।
साविलास[2] मुखं वीक्ष्य प्रोवाचाम्बां[3] सगद्गदाम् ।। ५ ।।

**मेना (उवाच)**

धन्ये पश्यामि नेत्रेण चिरमद्य[4] तवाननम् ।
पुत्रीस्नेहेन त्वां गौरीं[5] प्रसन्नेनान्तरात्मना ।। ६ ।।

---

1. 'मेनया सह त्वद्दर्शनायागामेनां करुणया गिरा' इति भावेऽयं प्रयोगः ।।

2. सविलासा सविलासं मुखं ।    3. अम्बा सगद्गदम् ।

4. चिराय ।    5. गौरि ।

आनन्दाम्बुनिधौ मग्ना सर्वेन्द्रियगणैः सह ।
इत्युक्त्वा तां समालिङ्ग्य चानन्दाम्बुपरिस्त्रवैः ।। ७ ।।

स्वेनानीतं क्रीडनकं [1]तस्यैदात्प्रीतितः सदा ।
रत्नाभरणजालानि गन्धागरु [2]निशादिकम् ।। ८ ।।

कुङ्कुमं रोचना पुष्पं वासोभारनिचोलफम् ।
पालिका वालिका दैव्यै सर्वं यत्तदुदाहृतम् ।। ९ ।।

सा दृष्ट्वा मेनया दत्तमनुमान्य मुदाम्बिका ।
तया हारविहारैश्च स्नाननीराजनोत्सवैः ।। १० ।।

क्रीडाभिर्विविधाभिः सा नित्ये वर्षं तदाम्बिका ।
सोऽप्यद्रिराण्महेशेन सपुत्रानुचरैः सह ।। ११ ।।

पूजितो गणवर्यैश्च उवासाचलसौधके ।
एकदा मेनया देवी कैलासाचलदर्शने ।। १२ ।।

नियोजिता शिवाज्ञातो द्रष्टुं देवी सखीगणैः ।
ततो विमानमारुह्य मेनयाम्बा मनोहरम् ।। १३ ।।

अष्टसिह्मसमायुक्तं कामगं सुमनोहरम् ।
रत्नोद्यद्द्युमणिप्रख्यं दीप्तिदीप्तदिगन्तरम् ।। १४ ।।

अत्यर्कवर्णं तरसा मनोवेगातिवेगितम् ।
मुक्तामाणिक्यखचितं पताकाछत्रशोभितम् ।। १५ ।।

---

1. तस्यै प्रादान्मुदान्विता । 2. निशा - Turmeric

सिंह्मासनयुतं दिव्यं मणिपुष्पसरावृतम् ।
मणिदीपमहाकान्तिकान्तितं चोज्ज्वलप्रभम् ।। १६ ।।

रत्नकुम्भशतोपेतमन्तरिक्षरथोपमम् ।
धूपामोदैकबहुलं पुष्पदामसुवासितम् ।। १७ ।।

मेनयाम्बा समारुह्य कैलासं द्रष्टुमभ्यगात् ।
फलजालैश्च ताम्बूलैर्गन्धपुष्पभरैरपि ।। १८ ।।

भूषिता भूषणैश्चित्रैर्दैव्याश्चापि सखीगणैः ।
रक्तानुरक्तनाट्यैश्च सेवावसरशिक्षितैः ।। १९ ।।

चामरैर्वीजयन्त्यन्याः काचिच्छत्रविधारिणी ।
काचित्ताम्बूलपात्रं च [1]कल्काधारधरापि च ।। २० ।।

कङ्कतादर्शनकराः फलपुष्प[2]स्रजोत्कराः ।
गन्धपात्रकरा वासपटवासकसत्कराः ।। २१ ।।

भृङ्गारुपानपानीयशीतैर्धूपैश्च दीपकैः ।
एवं सखीगणो देव्या देवीं मेनां च सेवते ।। २२ ।।

वीणावेणुमृदङ्गानां रम्यध्वनिकरास्तथा ।
उमा सन्दर्शयामास मेनायै तन्महोत्सवम् ।। २३ ।।

प्रथमावरणं देवी कैलासस्य महेशितुः ।
नानाप्रकारमणिभी रञ्जितं दिव्यमद्भुतम् ।। २४ ।।

---

1. कल्क - Paste or Powder
2. स्रजा इत्याकारान्तः स्रगित्यर्थे ।।

तत्प्राकारमणिज्योत्स्ना चन्द्रार्कौ नैव भासतः ।
गोपुराणां लक्षकैश्च सहस्रतलमण्डितैः ।। २५ ।।

रम्यरुद्रावलीक्लृप्तैर्महावृषभसेवितैः ।
पश्य [1]मेनेऽद्य परितः कल्पिता एव सागराः ।। २६ ।।

कैलासस्य महामेरुर्वृषस्तम्भ इव स्थितः ।
सागराः परिघाकारा प्राकारस्यास्य शोभिताः ।। २७ ।।

लक्षस्तम्भैर्मणीक्लृप्तैर्मण्टपोऽयं सुलोचने ।
तन्मध्ये सरसीराजत्कलहंसैः सपद्मकैः ।। २८ ।।

कुरुविन्दमणीजालसोपान प्रान्तभासुरम् ।
गन्धामोदितमन्दारतरवः परितः स्थिताः ।। २९ ।।

परितो वनमध्यस्थं मण्टपं पश्य रत्नजम् ।
नियुतस्तम्भसङ्क्लृप्तं पश्य बिल्ववनं महत् ।। ३० ।।

अरुणैः पल्लवैर्युक्तं मूले लिङ्गोपशोभितम् ।
तन्मध्ये मण्टपो भाति सहस्रस्तम्भमण्डितः ।। ३१ ।।

महामरकतैः क्लृप्ते तस्मिन् लिङ्गकुलं महत् ।
सहस्रमिदमुत्कृष्टं शिवप्रेम रसास्पदम् ।। ३२ ।।

पश्यैतद्बिल्वमन्दारपङ्कजाङ्कितमस्तकम् ।
उद्यत् त्रिपुण्ड्रविलसत्फालभागमनोहरम् ।। ३३ ।।

---

1. मातुर्नामग्रहणं नोपपद्यते इत्यतः अम्ब पश्याद्यपरितः इति पाठः युक्तो भाति ।।

भुजङ्गभोगकलितकण्ठे मौलौ फणायुतम् ।
मणिद्वीपमहाकान्तिरञ्जितं धूपितं सदा ।। ३४ ।।

रत्नपुष्करिणीतोयैरभिषिक्तं विलोकय ।
दर्शनादेनसां नाशो भविष्यति न संशयः ।। ३५ ।।

सुरम्यकेतकवनं पश्योन्निद्रोरुकेतकम् ।
वायुरावाति बहुलः सुखयत्येव तद्गतः ।। ३६ ।।

मन्दारसुन्दरवनं फुल्लपुष्पोत्थधूलिभिः ।
सुगन्धमेदुरोऽत्यन्तं मन्दप्राणैकतर्पणः ।। ३७ ।।

नन्दिकेशालयं पश्य गणलक्षैः परीवृतम् ।
नवरत्नचितानेकरत्नप्राकारगोपुरम् ।। ३८ ।।

नन्दीश्वरं सदानन्दी पूजयत्यतिभक्तितः ।
तल्लिङ्गाकारमेतद्वै मणीकलशसुन्दरम् ।। ३९ ।।

प्राकारं दक्षिणं पश्य नीलकल्पितमुन्नतम् ।
गोपुरार्बुदसंयुक्तं मणिकुम्भविराजितम् ।। ४० ।।

राजद्गोपुरगोद्भासिरुद्रचारित्रसद्वृषम् ।
पश्य चण्डीशनिलयं नानारत्नविचित्रितम् ।। ४१ ।।

तत्र चण्डीशनिलयं लिङ्गं चण्डेन पूजितम् ।
प्राग्दक्षिणे च लिङ्गानां कोटीनामालयं शुभम् ।। ४२ ।।

रत्नगर्भगृहोद्भासि मणिकुम्भोज्ज्वलत्प्रभम् ।
पश्चात्प्राकारमानीलं गोपुरावलिशोभितम् ।। ४३ ।।

राजत्प्राकारवृषभैर्मौलिमाणिक्यकुम्भकैः ।
पश्य मेने भृङ्गिकस्य सदनं मणिकल्पितम् ।। ४४ ।।

भृङ्गीशस्यालयं पश्य वरिवस्यापरो गणः ।
भृङ्गीश्वरस्य निलयमत्र पश्य शिवालयम् ।। ४५ ।।

नियुतं मणिलिङ्गानां गर्भधामोरुशेखरम् ।
रम्यप्रासादमौलिस्थक्रीडामणिसरोज्ज्वलम् ।। ४६ ।।

गोपुराग्रमहाकुम्भधारातति विराजितैः ।
रम्यं पुष्पवनं पश्य नानापादपमौलिगैः ।। ४७ ।।

पुष्पगुच्छपरागोत्थधूलिगन्धयुतोऽद्रिराट् ।
पश्योत्तरं हि प्राकारं नवरत्नविराजितम् ।। ४८ ।।

गोपुरोद्यन्मौलिकुम्भवृषरुद्रचरित्रकैः ।
शोभितैः परमोदारतलानां गणनापि च ।। ४९ ।।

शिवालयानां गणानां गणितुं नेह जातुचित् ।
रत्नकुम्भोज्ज्वलकुलं लिङ्गधामोरुबृन्दकम् ।। ५० ।।

पश्य क्षणेन मेनेऽद्य मुक्तपापा भविष्यसि ।
सुरत्नपद्मिनी चेयं पश्य चम्पकवाटिकाम् ।। ५१ ।।

रत्नचम्पकपुष्पौघैः फुल्लै रत्नसरोरुहैः ।
इत्युक्त्वा सा जगन्माता मेनया चावतीर्य च ।। ५२ ।।

विमानशिखराद्देवी मेनया चावतीर्य च ।
नानावृक्षशतोपेतां रत्नपुष्पविचित्रिताम् ।। ५३ ।।

तन्मध्यमणिधाराच्छमण्टपे संस्थिताम्बिका ।
मेनया च सखीभिश्च कृत्वा पुष्पावसेचनम् ।। ५४ ।।

राशीचक्रे पुष्पजालं मणिपुष्पैः सुगन्धितैः ।

सा रत्नमण्टपगता शशिधाममौलि-
लिङ्गार्चनाय च सखीनिचितैश्च पुष्पैः ।
सा मेनयाप्यवततार सुपद्मिनीं तां
स्नातुं सखीगणवरैः सरसानुलापैः ।। ५६ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे विंशोऽध्यायः ।।



## ।। एकविंशोऽध्यायः ।।

**स्कन्दः उवाच**

रत्नपुष्करिणीमध्ये सखीभिः सहिता शिवा ।
मेनया च जलक्रीडां कृत्वा च करसेचनैः ।। १ ।।

अन्योन्यस्तनकुम्भेषु कपोलजघनेषु च ।
धारायन्त्रैश्च सिसिचुस्स्तनपङ्कजकुड्मलान् ।। २ ।।

उत्फुल्लपुण्डरीकाणि[1] समाजह्ने सखीगणैः ।
नीलोत्पलकुलं चापि कुमुदं हल्लकं तथा ।। ३ ।।

तत्तीरं ताः समारुह्य चिरं क्रीड्य सरोवरम् ।
दुकूलकूलं ताः सर्वाः परिदध्युः सखीगणैः ।। ४ ।।

मेनयानुगता देवी मेनामेनामभूषयत् ।
धम्मिल्लमल्लीसरकैः कङ्कतैः स्वयमम्बिका ।। ५ ।।

अलकालम्बितकचं समीचक्रे स्वमातरि ।
रोचनाञ्जनसिन्दूरैर्नेत्रफाले चकार सा ।। ६ ।।

तिलकं तन्मुखे देवी स्वयमादर्शदर्शिनी ।
तत्पादाम्बुजयोर्देवी रसालक्तकपङ्क्तितः ।। ७ ।।

---

१. शब्दनियमा व्याकरणनियमाश्च बहुत्र बहुधा उल्लङ्घिता एव अर्थावबोधने तथा प्रयोगाः न बाधां जनयन्तीति, तदुद्घाटनाय तच्छोधनाय च नोद्यमः कृतः ।। भावप्राधान्यमवलम्ब्य पठनीयोऽयं निबन्धः ।।

स्वयं चक्रे महादेवी सख्यश्चक्रुः शिवां प्रति ।
अभूषयत्तदङ्गानि रत्नभूषादिभिः शिवा ।। ८ ।।

अधूपयत्कचभरं मेनायाः स्वयमद्रिजा ।
साङ्गरागं गन्धवरैः पटवासैस्तदाम्बिका ।। ९ ।।

स्वाङ्गं मेनाङ्गमप्याशु मण्डयद्वेणिमण्डलैः ।
नानापुष्पसरापारैर्धम्मिल्लं साप्यभूषयत् ।। १० ।।

ततो वनविहारार्थं समुत्तस्थौ सखीगणैः ।
देवी सा मेनया सार्धं पादयोजितपादुका ।। ११ ।।

ययौ वनस्थलीं तत्र पुष्पवृक्षोपशोभिताम् ।
चम्पकाशोकपुन्नागवकुलैश्चम्पकाम्रकैः ।। १२ ।।

कुटजैश्च धवैः फुल्लकेतकीनां गणैस्तथा ।
मन्दारपारिजातैश्च कुरवैः पारिजातकैः ।। १३ ।।

शमीशिरीषबिल्वैश्च रक्ताशोकैर्मधूककैः ।
मल्लीमुल्लिकुन्दवल्लीजाजीद्राक्षासुपिप्पली ।। १४ ।।

पूगीरम्भावृतापारपर्यन्तैः प्रसृतास्तदा ।
नीपानोकहजम्बीरजम्ब्वाम्रातकभल्लकैः ।। १५ ।।

लोध्रसल्लकभल्लैश्च फुल्लहल्लकभल्लकैः ।
कासारासारमध्यस्थमणिमण्टपमध्यगा ।। १६ ।।

विजहार वने देवी मेनया स्वसखीगणैः ।
उत्फुल्लारक्तकमलहल्लकान्युज्जहार सा ।। १७ ।।

उत्फुल्लचम्पकानां च पुष्पाण्यपचिनोत्तदा ।
मल्लीकुन्दाच्छवकुलपारिजातसमुद्भवाः ।। १८ ।।

मालाश्चोद्ग्रथ्य पुष्पाणां देवी पक्वफलान्यपि ।
समाजहारावलिभिः सा वृक्षाधःस्थमञ्चगा ।। १९ ।।

मेनया[1] परया प्रीत्या सखीगणनिषेविता ।
नरिकेलाम्रपनसमातुलुङ्गैङ्गुदीफलैः ।। २० ।।

करञ्जैः कदली जम्बूदाडिमीलिकुचैस्तथा ।
पुण्ड्रेक्षुकारखण्डैश्च नानाभक्ष्यान्नराशिभिः ।। २१ ।।

क्षीरोदनैर्घृतान्नैश्च दध्यन्नैः सोपदंशकैः ।
शाकसूपापूपजालैर्दधिक्षीरघृतादिभिः ।। २२ ।।

लिङ्गपूजां समारेभे सा देवी मेनया सह ।
सख्यानीतैर्गन्धपुष्पपञ्चामृतघटीशतैः ।। २३ ।।

फलजालैस्तथेक्षूणां सारैः क्षौद्रैः सशर्करैः ।
वासोभूषणताम्बूलैर्धूपैर्दीपैर्मनोहरैः ।। २४ ।।

दृष्ट्वाऽऽदर्शं महादेवी त्रिपुण्ड्ररचनादरा ।
मुक्तान्तरितरुद्राक्षमालाशोभितकन्धरा ।। २५ ।।

मेनया सा ययौ तत्र रम्यं देवीश्वरालयम् ।
यत्प्राकारमहामौलिगर्भागारैकसुन्दरम् ।। २६ ।।

गोपुरोद्भासिमाणिक्यकुम्भैः सद्वृषभैरपि ।
शोभितं मण्टपगणैर्धूपदीपालिरञ्जितम् ।। २७ ।।

---

1. पाठः न सङ्गच्छते । मेना च परया प्रीत्या . . . . . . . . . . . ।।
   इति पाठः युक्तः भवति ।।

तत्रान्तर्गृहमासाद्य मेनयैक्षि सखीगणैः ।
शुद्धकर्पूरधवलं मणिबिम्बोत्तमाङ्गकम् ।। २८ ।।

हीरत्रिपुण्ड्रसंशोभि उद्यत्फणिफणावृतम् ।
सोमार्धशेखरलसन्मणिहारविभूषितम् ।। २९ ।।

तल्लिङ्गं वीक्ष्य सा देवी प्रणम्य मणिभूषितम् ।
देवीश्वराभिधं तत्र देवी सा मेनया युता ।। ३० ।।

पूजयामास विभवैः पञ्चामृतनिषेचनैः ।
फलसारैश्च विविधैश्चन्दनाम्भोघटैरपि ।। ३१ ।।

वस्त्रगन्धाक्षतैर्बिल्वैः पुष्पमालाभिरीश्वरी ।
धूपैर्दीपैश्च विविधैरानीतैर्भक्ष्यभोज्यकैः ।। ३२ ।।

अन्धसां राशिभिर्देवी निवेद्य परमेश्वरी ।
ताम्बूलानां भरैर्देवी प्रदक्षिणनतिक्रमैः ।। ३३ ।।

स्वसखीगणसङ्क्लृप्तवाद्यनाट्यनिषेवितैः ।
सम्पूज्य सा महादेवी देवीशं मेनया सह ।। ३४ ।।

लिङ्गाग्रे संविवेशाम्बा रुद्रवीणाकरा तदा ।
नखोद्घृष्टमहातन्त्री गानरक्तानुकण्ठतः ।। ३५ ।।

तुष्टाव स्तोत्रवर्येण तदा देवीश्वरं शिवा ।।

**देव्युवाच**

पुरहरभगवन्कुरु करुणां मयि स्मरहर शङ्कर प्रभो ।
गरधर गुरुभरजगदुद्धारक मुरहरपूजितपाद ।। ३७ ।।

गजहर यमहर भगरदहर हरिशर हर हर पाहि ।
अगपतिविलसितलिङ्गकुलान्तरभरितानन्दकमोद ।। ३८

परिफुल्लाम्बुज बिल्वालङ्कृत शशिधामोद्यतमौले ।
परिपाहीश्वर शङ्कर सुन्दर भक्तजनप्रिय शम्भो ।। ३९

उद्यद्दिनकरसम सुमजाधिकमारवराङ्गकभूष ।
भसितालङ्कृतनिटिलालङ्कृतपुण्ड्रोत्तम परिभूष ।। ४०

चक्षुःश्रवगणमणिगणकन्धर सोमार्यमानलाक्ष ।
तुरगायितनिगमाव्यय हर श्रुतिमौल्युद्य(द्धृ)त कीर्ते ।। ४१

परिपाहीश्वर देव दयाकर भगवन्नव मां दीनाम् ।
पुरहर मुरहरपूजितपाद शङ्कर हर हर शम्भो ।। ४२

गङ्गाधर हर गरकन्धर हर काकोदरवरहार ।
परिपाह्यद्य निशाकरलोचन दयया सुतरां गिरिवास ।। ४३

सूतः (उवाच)

इत्थं सा गानधाराभिस्तुष्टावाष्टाकृतिं हरम् ।
तद्गानधारां तां श्रुत्वा मेना विस्मायितान्तरा ।। ४४ ।।

चित्रार्पितेव सा तस्थौ तत्र सोऽपि सखीगणः ।
तन्त्र्यातिशयकण्ठोत्थरक्तिरागैकमेदुरम् ।। ४५ ।।

रागानुरागं शु(सु)श्रावमतिगान्धर्वमुत्तमम् ।
सञ्जातपुलका[1] स्त्राविन्योयं(?) पङ्कजकुड्मलैः ।। ४६

---

1. सञ्जातपुलकाः श्रुत्वा श्रोत्रपङ्कजकुड्मलैः इति अथवा नेत्रपङ्कजकुड्मलैः उन्मेषनिमिषैर्हीना इति, प्रकारान्तरेण वापि साङ्गत्यमत्र ।।

उन्मेषनिमिषैर्हीनास्ताः पश्यन्त्यालयेऽम्बिकाम् ।
विसृष्टगाना सा देवी नृत्यं लिङ्गाग्रतः कृतम् ।। ४७ ।।

सखीभिर्जातहर्षेण[1] मेनयापश्यदीश्वरी ।
तदालयात्तटं[2] प्राप्य देवगङ्गामणिद्युति ।। ४८ ।।

तन्मध्यमण्टपान्तस्था नवरत्नविचित्रिते[3] ।
भोजयामास सा देवी निवेदितमुमापतेः ।। ४९ ।।

भक्ष्यान्नं[4] . . . . . मेनां चैव सखीगणम् ।
स्वयं चापि महादेवी बुभुजे षड्रसान्वितम् ।। ५० ।।

रत्नपात्रपरिक्लृप्तैर्नानाभक्ष्यान्नमुत्तमम् ।
खाद्यैः पेयैश्च मधुरैः पानीयैः शीतलैः शिवा ।। ५१ ।।

स्वर्णभृङ्गारकलितैः पाटलागरुगन्धितैः ।
देव्युवाच
अहो धन्ये महामेने शिवनैवेद्यमीदृशम् ।। ५२ ।।

पापजालैकसंहारि आस्वादय सुधाधिकम् ।
भक्ष्यं भोज्यं तथापेयं दध्यन्नमिदमुत्तमम् ।। ५३ ।।

गृहाण सोपदंशानि पानानि विविधानि च ।
रसवन्त्यद्य सुभगे शिवनैवेद्यमुत्तमम् ।। ५४ ।।

---

1. जातश्चासौ हर्षश्चेति कर्मधारयः ।
2. 'तदालयाद्देवगङ्गातटं प्राप्य मणिद्युति' इति भावेऽयं प्रयोगः ।
3. पीठे तले वेति विशेष्यवाचकपदं अध्याहार्यम् ।
4. विविधं प्रीत्येति पादपूरणम् ।

इति तां भोजयामास रत्नपात्रैः सखीगणम् ।
देवगङ्गासरित्तीरे सोपानतटमण्टपे ।। ५५ ।।

देवी प्रक्षाल्य हस्तौ च मण्टपे स्वे वरासने ।
मेनया संस्थिता देवी ताम्बूलैः सुमनोहरैः ।। ५६ ।।

मुखवासैः सुधूपैश्च स्रग्गन्धाभरणार्पणैः ।
विश्राणयत्तदा मेनां स्वसखीगणमुत्तमम् ।। ५७ ।।

स्वयं चाभूषयद्गात्रं दिव्याकल्पैर्महेश्वरी ।
दिव्याङ्गरागभूषैश्च पुष्पैर्वस्त्रैश्चभूषिता ।। ५८ ।।

स्वसखीकल्पितापारवेणुवीणामृदङ्गकैः ।
दिव्यनाट्यसमारम्भैर्निनाय दिवसं क्षणात् ।। ५९ ।।

रत्नकन्दुकलीलाभिरक्षक्रीडारसैः शिवा ।
कदाचिद्वनमध्यस्थ वृक्षलम्ब[1]नमेचकैः ।। ६० ।।

मेनया सा प्रमुदिता वनमण्टपमध्यगा ।
धारोच्छ्रायगृहे देवी चण्डांशुकरतापिता ।। ६१ ।।

मयूरशुकशारीक[2]कलहंसांश्च पश्यती ।
रत्नदण्डामलैर्देवी चक्रे हल्लीसलास्यकम् ।। ६२ ।।

मेनया स्वसखीभिश्च वृक्षान्दोलैश्च शङ्करी ।
मणिद्वीपे कदाचित्सा मेनया विजहार सा ।। ६३ ।।

सुधासागरमध्यस्थनौकाक्रीडादिभिः शिवा ।
क्षेपणीक्षेपितजलैः सखीभिर्गानधारया ।। ६४ ।।

---

1. वृक्षालम्बितमञ्चकैः ।      2. शारिका ।

स्वयं रुद्रमहावीणां गृहीत्वा गानधारया ।
शिवनामानि गायन्ती तोषयामास मातरम् ।। ६५ ।।

उद्यच्छशाङ्कधवलरत्नप्रासादमौलिगा ।
रत्नमञ्चेषु सा देवी पुष्पप्रस्तरकेषु च ।। ६६ ।।

चन्द्रचन्दनलिप्ताङ्गी मेनया वीजिता तदा ।
सखीभिः सेविता देवी नानासेवारसैः सदा ।। ६७ ।।

शयाना पुष्पपर्यङ्के देवी रात्रिमनीनयत् ।

**स्कन्दः (उवाच)**

एवं नानाविधाः क्रीडाः देव्या हर्षोरुधारया ।। ६८ ।।

कैलासे च मणिद्वीपे उवास चिरमम्बिका ।
मेनया सा सखीभिश्च प्रमोदामोदनिर्भरा ।। ६९ ।।

वर्षाणां शतकं सदा गिरिवराज्जाता सखीभिः सुखं
सा मेनां नगराजमूर्धनि शिवा दिव्याङ्गरागैः शुभैः ।
भक्ष्यैर्भोज्यरसैः सदा रसभरैः क्रीडादिभिस्तोषय-
द्विश्वेशानुमतेन भाग्यनिवहैर्देवीसखीनां गणैः ।। ७० ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे देवीविहारो नाम एकविंशोऽध्यायः ।।



## ।। द्वाविंशोऽध्यायः ।।

**स्कन्द उवाच**

एवं देव्या पूजिता सा मेना धन्यमनोरथा ।
देव्या क्रीडारसभरैर्विहारशयनासनैः ।। १ ।।

निनाय दिवसांस्तत्र कैलासे नन्दिता भृशम् ।
भूधरोऽपि समैनाकः पूजितः शङ्करेण हि ।। २ ।।

रत्नसौधे महामञ्चे भक्ष्यभौज्यैश्च पर्वतः ।
स्रग्गन्धावासताम्बूलैर्गणानां पूजनैस्तथा ।। ३ ।।

वाग्भिः सम्भावयामास नित्यहर्षोरुधारया ।
फलं मूलं तथोवान्नं वासोगन्धसुमादिकम् ।। ४ ।।

यद्यत्प्रीतिकरं शम्भोः प्रियं देवी च सा मुदे ।
पर्वतेन्द्राय सा देवी प्रेषयामास मोदिता ।। ५ ।।

शिवस्यानुमतेनैव नित्यं वृद्ध्या सुखोदकैः ।
एवं देवेन देव्या च हिमवान्भूधरोत्तमः ।। ६ ।।

पूजितो मेनया सार्धं मैनाकेन तदा गिरिः ।
नानाहारविहारैश्च प्रीत्या तत्रानुमोदितः ।। ७ ।।

एकदा सन्निधिं प्राप्य शम्भोस्तत्र गिरीश्वरः ।
तुष्टाव देवं देवीं च कैलासे शङ्करालये ।। ८ ।।

**हिमवान्**

दिक्चेल फालतिलकानल कालकाल
व्यालेन्द्रमाल गलनील कराब्जशूल ।
लीलाकृताङ्ग निखिलागमतत्त्वमूल
बालार्धगात्र मुनिबालकृतालबाल ।। ९ ।।

तिग्मांशुशीतांशुजहव्यवाह-
नेत्रोज्ज्वलन्मदनकाय उमासहाय ।
भूदारदार नरसिह्मविदारणेश
दैत्योरुसिन्धुरकटीतटचर्मवस्त्र ।। १० ।।

गङ्गातुङ्गजटोरुशेखर सुधाधामार्धखण्डोज्ज्वल
स्थूलापारद्विजिह्वहारवलय प्रोद्यज्झणन्नूपुर ।
उक्षेन्द्रोत्तमवाहनाव्यय हर धारोरुसत्स्यन्दन
सोमार्यम्णकचक्रकर्षण महावाहार्ववेदोत्तम ।। ११

शम्भो मे दिश भद्रमद्य दयया मां पाहि सर्वेश्वर
पाथोजातभवोत्तमाङ्गहरणापारव्यथां संहर ।
पद्मोत्थापतिनेत्रपद्मनिवहापारर्चिताजार्चित
भूधृग्धुर्यशरासनोरुविहितामौर्वी महाहारक ।। १२

पाह्यद्रीश्वर लिङ्गमौलिवसते शम्भोमृडानीपते ।। १३

कुलाचलशरोत्तमं कुलिशपाणिभोगप्रदं
कुमापतिशरोत्तमं कुसुमबाणदग्धाङ्गकम् ।
कुलीरकवरप्रदं कुटिलसौरिदर्पापहं
कुसीदजन दूरगं कुमतिदुःखदं त्वां भजे ।। १४

सूतः

तत्स्तुतीः स शिवः श्रुत्वा हर्षनिर्भरमानसः ।
उवाच नन्दिनं वीक्ष्य देवदेवोऽद्रिजासखः ।। १५ ।।

प्रणमन्तं च शैलादिं स्वर्णवेत्रलसत्करम् ।

ईश्वर उवाच

भूधरेन्द्रेण गच्छ त्वं विमानेनार्करोचिषा ।। १६ ।।

दर्शयास्मै मदीयो[1] यं कैलासः स शिवालयः ।
न ग्लानिर्नश्रमो वास्य तत्तथा संविधीयताम् ।। १७ ।।

गच्छतो मेनया सार्धं मैनाकेन नगेशितुः ।
इति शम्भोर्वचः श्रुत्वा नन्दिकेशः कृताञ्जलिः ।। १८ ।।

हिमाचलं समैनाकं गृहीत्वा करपल्लवैः ।
अत्यर्कं सुविचित्रं च पताकावलिभासुरम् ।। १९ ।।

पुष्पमालापरिक्षिप्तं मुक्तामालापरिष्कृतम् ।
फलपुष्पाम्बुसंयुक्तं भक्ष्यभोज्यसमन्वितम् ।। २० ।।

मृदङ्गमुरजोद्घुष्टं रुद्रकन्यावृतं तथा ।
गणतौर्यत्रिकापारविनादितदिशामुखम् ।। २१ ।।

शिवाज्ञया गिरिवरं रत्नसिह्मासने वरे ।
उपवेश्यासने नन्दी समैनाकं स्वयं तथा ।। २२ ।।

---

1. मदीयो यः कैलासस्तं शिवालयम् ।

अन्यसिह्मासने विप्र गणवृन्दैः समन्ततः ।
दर्शयामास शैलेन्द्रं गणेन्द्रो भूधरं तदा ।। २३ ।।

प्राह प्रालेयशैलेन्द्रं नन्दी नन्दितमानसः ।

**नन्दिकेशः (उवाच)**

पश्य धन्येन नेत्रेण कैलासं शङ्करस्य हि ।। २४ ।।

यत्रैकं वा शिवागारं तत्क्षेत्रं योजनावृतम् ।
तत्रैव वसतां पुंसामप्याकीटपिपीलिकम् ।। २५ ।।

मुक्तिरीशप्रसादेन पश्यतां पापनाशनम् ।
अत्रानन्तशिवागारे मौलीकुम्भैकदर्शनात् ।। २६ ।।

न जाने महिमां वक्तुं शिवो जानाति नेतरः ।
कैलासं शङ्करावासं नानाद्रुमलतायुतम् ।। २७ ।।

रत्नपुष्करिणीफुल्लसरोजकुलसङ्कुलम् ।
नानावल्लीवेष्टितोरुवनस्पतिशतायुतम् ।। २८ ।।

नानापक्षिरुतापारवननिर्झरकन्दरम् ।
मृगेन्द्रसिन्धुरेन्द्रादिचमरैरहिभिर्वृतम् ।। २९ ।।

कोकिलाकाकलीगानशुकसारिकसारसैः ।
कुरराक्रन्दबहुलं हंसनादविनादितम् ।। ३० ।।

नगमौलिगतोत्तुङ्गसालतालद्रुमाकुलम् ।
सुरम्यबन्धुरामोदपुष्पकिञ्जल्कमारुतम् ।। ३१ ।।

पुष्पगुच्छभरालोलमारुतामलभूतलम् ।
तलशोभितपुष्पौघफलतारायितोत्तमम् ।। ३२ ।।

प्रभातवातपोतोद्यच्छीतलायितभूतलम् ।
द्रौणिजालम्बिसत्क्षौद्ररसात्तससुधाङ्गणम् ।। ३३ ।।

भ्रमद्भ्रमरझङ्कारमधुकोद्दामगन्धिनम् ।
केतकीपुष्पसौरभ्यसुगन्धायितदिक्तटम् ।। ३४ ।।

कुरवोद्दामगन्धोद्यच्चन्दनानन्दितानतनम् ।
तिलकायितदेवद्रुमौलिस्थतिलकैर्युतम् ।। ३५ ।।

वातपोतमुखाहारवल्मीकक्षितिपन्नगम् ।
करटीकटधारार्दीकृतगन्धितभूतलम् ।। ३६ ।।

रोमन्थफेन बिन्दूद्यन्महिषीणां गवां तथा ।
ऊधोनिर्यत्पयःपूर पङ्किलायितभूतलम् ।। ३७ ।।

तत्पङ्कपङ्क्तिसंलग्नवरैणखुरभूतलम् ।
मुस्ताम्रेडानकोद्धृष्टकोलदंष्ट्रोत्थितोपलम् ।। ३८ ।।

गैरिकापीतहारीतरक्तमाञ्जिष्ठधातुभिः ।
स्रवन्तं रीतिभिः शैलं गजेन्द्र इव च त्रिधा ।। ३९ ।।

उत्तुङ्गशिखरापारश्रृङ्गैरुल्लिखिताम्बरम् ।
दर्शयामास नन्दीशो नगराजाय तं नगम् ।। ४० ।।

---

1. मुस्ता - a kind of grass or bubous root. आम्रेडनक आम्रेडन - Repetition माञ्जिष्ठः कृष्णपाण्डुरवर्णः ।

कैलासं कलधौतोद्यद्रम्यकान्तिविराजितम् ।
प्राह तं नन्दिकेशोऽपि शिखरीन्द्रं शिवाज्ञया ।। ४१ ।।

**शैलादिः (उवाच)**

पश्य शैलं महाशैलं महेशस्य दृशा तव ।
पश्य पश्येदमतुलं प्राकारवरगोपुरम् ।। ४२ ।।

नानागोपुर सौधैश्च मदालयमिदं ततम् ।
अम्बिकेशाख्यमतुलं गृहेशं भो वरालयम् ।। ४३ ।।

एष रत्नगिरिर्भाति रत्नकान्तिशिलोच्चयः ।
तत्र रत्नाग्रशिखरः प्रासादोऽयं महेशितुः ।। ४४ ।।

उद्यत्पताकरुचिरो रत्नतोरणमण्डितः ।
हरिन्मणिमयो भाति सहस्रस्तम्भमण्डपः ।। ४५ ।।

मध्येशैलं सदाभाति हरमानसमोदभूः ।
कोटिलिङ्गालयानां च शिखराण्यपि पश्य भोः ।। ४६ ।।

दर्शनेनापि पापानां प्रलयोऽद्य भविष्यति ।
एष दक्षिणतो मेरोः प्राकारो मणिकल्पितः ।। ४७ ।।

चण्डीश्वरालयं पश्य रत्नसौधवरान्वितम् ।
चण्डीश्वरेशशिखरं पश्य तं च नमस्कुरु ।। ४८ ।।

लिङ्गायुतमहासद्मप्रोद्यत्कुम्भैकभासुरम् ।
पश्य शैलेश्वरापारगोपुराणां तलान्यपि ।। ४९ ।।

सुरत्नपद्मिनी चेयं रत्नसोपानमण्टपैः ।
परितः पदवीनां च रत्नकुड्मलहल्लकैः ।। ५० ।।

मणिजैररविन्दोद्यत्परागरसरञ्जिता ।
कैलासेशस्य शिखरं पश्य भूधरनायक ।। ५१ ।.

उद्यत्पताकाकलशरत्नगोपुरभासुरम् ।
अत्र स्वयं महादेवः सम्पूजयति सर्वदा ।। ५२ ।।

तल्लिङ्गवरिवस्यातः हर्षतो देवनायकः ।
प्रदोषेषु विशेषेण पश्य नृत्तोरुमण्डपम् ।। ५३ ।।

अभ्रंलिहैर्महाकुम्भैर्विशालैर्मणिभासुरैः ।
सुरम्यरत्नवेदीभिः परितः परिवेष्टितैः ।। ५४ ।।

अत्र देवीं समावेश्य रत्नसिह्मासने शिवः ।
मणिरङ्गे सदा सायं नृत्यत्यानन्दनिर्भरः ।। ५५ ।।

मया च गणनाथेन स्कन्देन गणपैर्वृतः ।
वेणुमद्दलमड्डूत्थतालकाहलनिःस्वनैः ।। ५६ ।।

सभाः पश्यात्र वितता मणिमौलिपताककाः ।
सहस्रस्तम्भसंयुक्ताश्चतुर्दिक्षु मनोहराः ।। ५७ ।।

सौवर्णी राजती चापि चित्सभात्र महेशितुः ।
अन्या रत्नसभाचेयं रत्नापारैककान्तियुक् ।। ५८ ।।

सायं नृत्यति देवेशो देव्यग्रे च सभासु च ।
रम्यं सहस्रलिङ्गानामिदमालयमुत्तमम् ।। ५९ ।।

उद्यद्दिवाकरप्रख्यं कुम्भजालकिताम्बरम् ।
पश्यात्र देवदेवस्य कोटिस्तम्भोरुमण्टपम् ।। ६० ।।

धूपदीपमणिज्योतिरुद्राक्रीडनमुत्तमम् ।
मौलिजालकमध्यस्थमणिकुम्भोज्ज्वलद्वृषम् ।। ६१ ।।

सुरम्यवापिका चेयं सुधाकल्लोलमालिनी ।
देवगङ्गातटं पश्य लिङ्गसौधोरुमण्टपा ।। ६२ ।।

सुधासागरगा चैष गङ्गा कैलासमौलिगा ।
पञ्चवक्त्रेश्वरस्यापि पश्य सद्म मनोहरम् ।। ६३ ।।

रत्नकुम्भमहाकान्ति तिरस्कृत दिवाकरम् ।
तल्लिङ्गपञ्चवक्त्रोत्था नद्यः पञ्चात्र सुस्रुवुः ।। ६४ ।।

शिवगङ्गा देवगङ्गा रत्नगङ्गेति विश्रुताः ।
कैलासगङ्गा शैलेन्द्र मधुगङ्गेति च क्रमात् ।। ६५ ।।

सर्वास्तास्तीरबद्धोरुमणिसोपानमण्टपाः ।
परितः शोभितापारशिवसौध विराजिताः ।। ६६ ।।

लिङ्गसद्ममहाकुम्भबिम्बितोत्तुङ्गनीरकाः ।
रत्नकर्कटमत्स्यैश्चपद्महंसैककोककाः ।। ६७ ।।

नीलोत्पलामलमणिप्रासादो रत्नरञ्जितः ।
उद्यत्कुम्भः सदा भाति दिव्यसिह्मासनोचितः ।। ६८ ।।

रत्नेश्वरालं पश्य नवरत्नविचित्रितम् ।
पश्य बिल्ववनं शम्भोः नवारुणदलान्वितम् ।। ६९ ।।

तन्मूलमणिलिङ्गोद्यद्धारारस विजृम्भितम् ।
कल्पवाटीमिमां पश्य नवरत्नविचित्रिताम् ।। ७० ।।

कन्दलेशालयं पश्य शैलात्र सुमनोहरम् ।
कुल्याश्चात्र प्रपश्याद्य मधुक्षीरघृतस्रवाः ।। ७१ ।।

देवीश्वरालयं पश्य सदा देव्याः प्रियङ्करम् ।
तत्र सालवनं पश्य परिच्छदफलावृतम् ।। ७२ ।।

विलोकय दृशा शैल पश्चिमे गोपुरं स्थितम् ।
सहस्रतल संयुक्तं गवाक्षं वृषभैर्युतम् ।। ७३ ।।

रम्योत्तुङ्गमणिद्योति शिखराग्रपताककम् ।
उग्रेश्वरालयं पश्य उग्रपातकनाशनम् ।। ७४ ।।

श्रृङ्गिसौधोऽयमतुलो बाणस्यात्र गृहं महत् ।
हरिकेशालयं पश्य पश्य स्कन्दालयं महत् ।। ७५ ।.

अम्बिकेशस्य शिखरं पश्य* प्रणतिगो नग ।
नवरत्नमहाशैलान्पश्य सौधोत्तमैर्वृतान् ।। ७६ ।।

उत्तमेशमहाधाम पश्यात्र सुमनोहरम् ।
गर्भेशगर्भभवनं पश्य कुम्भैकभाततम् ।। ७७ ।।

मण्टपं दशसाहस्रस्तम्भकुम्भविराजितम् ।
कैलासनलिनी चेयं रत्नफुल्लाम्बुजावृता ।। ७८ ।।

तन्मध्यसौधमध्यस्थमणिमञ्चं प्रपश्य भोः ।
कुलिशेशालयं पश्य पापाद्रिकुलिशं हि तत् ।। ७९ ।।

---

* दृष्टि प्रीणनकं चक्षुःप्रीणनकमितिवा ।

कुलशैलं प्रपश्याद्य चन्द्रकान्त शिलातलम् ।
सहस्त्रयोजनायामं तत्र चन्द्रेश्वरालयम् ।। ८० ।।

कुलाचलमहासौधान्प्रपश्य नगसत्तम ।
अयुतं लिङ्गसदनं मदनान्तकरप्रियम् ।। ८१ ।।

आलोकय महाशैल शैलेशस्य वरालयम् ।
क्षीरोदवापिका चेयं रत्नसोपानमण्टपा ।। ८२ ।।

क्षीरेश्वरालयं तीरे तस्याः पश्य मनोहरम् ।
मयूरेशस्य सद्मैतद्वनगर्भे विलोकय ।। ८३ ।।

रिटिरास्तेऽत्र सौधे तु आज्ञया शूलिनो नग ।
पूर्वतोऽहं दक्षिणतश्चण्डी भृङ्गी रिटिस्तथा ।। ८४ ।।

पश्चादथोत्तरे शैल चन्द्रचूडस्य शासनात् ।
पालयामो गणौघैश्च सदा शूलवरायुधैः ।। ८५ ।।

**नन्दीश्वरः (उवाच)**

एतल्लिङ्गकुलं त्वपारमणिजैः सौधैश्च सद्गोपुरैः
रम्योत्तुङ्गनिखातसागरमहाप्राकारभूभृद्गणैः ।
फुल्लाब्जैः सरसीगणैः सुमवनैः क्लृप्तोऽद्यवै भूधर
विश्वेशेन विचित्रचित्रमनसा सम्पश्य शैलोत्तम ।। ८६ ।।

ताराराजविराजितोरु शिरसो वासो ह्ययं शैलराट्
राजद्राजतकान्तिसारनिवहैः श्रीविप्रराजाधिकः ।
राजल्लिङ्गगणै रराज भुवने विश्वेश्वरस्याज्ञया
राजद्राजसखस्य राजति परं शैलाधिराजेक्षय ।। ८७ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे हिमाचलस्य कैलासदर्शनं नाम द्वाविंशोऽध्यायः ।।

## ।। त्रयोविंशोऽध्यायः ।।

**नन्दिकेश्वर उवाच**

गणेश्वरस्य सदनं पश्य कुम्भविराजितम् ।
हरसौधमिमं पश्य अत्यर्कच्छद सुन्दरम् ।। १ ।।

पाटलीनां वनं पश्य बहुधामोदगन्धितम् ।
पाटलीशागारमेतत् पापपाटन[1]चञ्चुरम् ।। २ ।।

स्वर्णतालीवनं पश्य पश्य रुद्राक्षकाननम् ।
रुद्ररूपमहावृक्षैर्युतं पापभयापहम् ।। ३ ।।

भस्मसारसरश्चापि पश्यात्र कुसुमोज्जलम् ।
भस्मेश्वरालयं पश्य दर्शनात्पापभस्मकृत् ।। ४ ।।

गन्धशैलोरुशिखरे पश्य गन्धेश्वरालयम् ।
चन्दनानां वनं पश्य नयनानन्ददायकम् ।। ५ ।।

घृतकुल्यामिमां पश्य तप्ताच्छघृतगन्धिताम् ।
घृतेशधाम पश्यात्र नगेश्वर दृशोर्द्वयम् ।। ६ ।।

त्वं कृतार्थीकुरु क्षिप्रं क्षिप्रेशालय लोकनात् ।
उत्तरं गोपुरं पश्य महावृषभशेखरम् ।। ७ ।।

गारुडोद्भासि रत्नाच्छमण्टपं पश्य भूधर ।
पुष्परागेशशिखरं पश्यागरुवनं महत् ।। ८ ।।

---

1. चञ्चुर - expert, clever.

देवदारुवनं पश्य देवदारेश्वरालयम् ।
कालाग्निरुद्रसदनं पश्यात्र सुमनोहरम् ।। ९ ।।

गन्धर्वेशालयं पश्य देवेशशिखरं महत् ।
तरणीशालयं पश्य पद्मगर्भेश्वरालयम् ।। १० ।।

सुधाविपिनमप्यत्र पश्य खर्जूरकाननम् ।
पूगीवनमिदं पश्य देश(व)पर्णालयं नग ।। ११ ।।

भैरवेशालयं पश्य मणिखण्डेश्वरालयम् ।
सुधावापीयमतुला सुधया पूरितात्र तु ।। १२ ।।

श्रीमहेशेन करुणाकटाक्षरसवीक्षणात् ।
तत्तीरे पश्य सुभगं सुधाधामेश्वरालयम् ।। १३ ।।

अमृतेशालयं पश्य कूपः पापविनाशनः ।
जटेश्वरस्य शिखरं पश्य नन्दनकाननम् ।। १४ ।।

पश्याम्रवणमेतद्वै तरुणारुणपल्लवम् ।
आम्रेश्वरालयं पश्य पश्य लिङ्गशताष्टकम् ।। १५ ।।

बिल्वमन्दारसन्मौलिफणीफणविराजितम् ।
मणिगर्भगृहान्तःस्थत्रिपुण्ड्रोज्जवलफालकम् ।। १६ ।।

उद्यदर्ककरप्रख्यं शिवप्रासादमीक्षय ।
कुरुविन्दमणिस्तम्भ मणिमण्टपमीक्षय ।। ९७ ।।

पिप्पलेशालयं पश्य पश्याशोकवनं महत् ।
विशोकेशस्य सदनं पश्य मन्दारकाननम् ।। १८ ।।

शुकेश्वरस्य सदनं पश्याद्य वरभूधर ।
दृशेशस्य महासद्म पश्य प्रासादकेश्वरम् ।। १९ ।।

उरगेशालयं पश्य चेशानसदनं महत् ।
रुद्रेशस्यालयं पश्य पारिजातवनं महत् ।। २० ।।

रत्नप्रासादशिखरं पश्यात्र सुमनोहरम् ।
गिरिकेशालयं पश्य हरिकेशवनं नग ।। २१ ।।

सरोवरं तु पश्याद्य सागराख्यमिदं नग ।
सागरेशस्य शिखरं पश्यात्र सुमनोहरम् ।। २२ ।।

उत्पलेशालयं पश्य कुमुदेशालयं ततः ।
हंसेश्वरमहाधाम धाम भद्रेश्वरस्य च ।। २३ ।।

तत्प्रासादस्य सौधाग्रं पश्यैतद्वृषलाञ्छितम् ।
मणिज्योतीश्वरं पश्य मौलिं कामेश्वरस्य च ।। २४ ।।

मधूकखण्डमप्यत्र द्राक्षावल्लीवनं ततः ।
कैलासगङ्गा तत्रैव वीक्षयाद्य नगोत्तम ।। २५ ।।

तत्प्रान्तार्बुदलिङ्गानां सौधमालां विलोकय ।
कुम्भावलीमिमां पश्य दर्शनात्पापनाशिनीम् ।। २६ ।।

तमालवनमध्यस्थं मालीशशिखरं दृशा ।
पश्य त्वं सुन्दरेशस्य कपर्दीशालयं तथा ।। २७ ।।

यक्षेश्वरस्याभयदं पापभक्षेश्वरस्य च ।
वनेशोऽयं मतङ्गेशः प्लक्षेशोऽयं द्रुतीश्वरः ।। २८ ।।

शिखरं विनतेशस्य वसतीशस्य लोकय ।
एलावनमिदं पश्य रत्नगुच्छैर्विराजितम् ।। २९ ।।

कुलाचलानां सौधोरुलिङ्गकुम्भान्विलोकय ।
तव धाम महामौलिलिङ्गं च हिमभूधर ।। ३० ।।

तत्पुरस्ताद्रत्नभूमिः सुधासिन्धुर्विराजते ।
तरङ्गमालावितता सुधापिण्डोरुफेनवान् ।। ३१ ।।

तन्मध्ये च मणिद्वीपश्चाकचक्यैश्चकास्ति वै ।
मणिद्वीपेशशिखरं मध्ये पश्य नगोत्तम ।। ३२ ।।

मणिगङ्गातटं पश्य मणिगङ्गा सुधाब्धिगा ।। ३३ ।।

करञ्जवनमध्यस्थं करञ्जेशं शिवालयम् ।
एवं शताष्टौ प्राकाराः श्रीमहेशेन कल्पिताः ।। ३४ ।।

कैलासमौलिवितताः रत्नलिङ्गालयैः सह ।
तत्रान्तरे च भवनं स्कन्दस्य गणपस्य च ।। ३५ ।।

स्कन्देश्वरस्य शिखरं पश्य विघ्नेश्वरस्य च ।
देव्या(य)न्तः सदनं तत्र मणिसौधं विलोकय ।। ३६ ।।

नानास्कन्दगणास्तत्र विघ्नेशस्य महागणाः ।
शक्तिपाशाङ्कुशधरास्तत्र प्राकाररक्षकाः ।। ३७ ।।

नवलक्षं पञ्चलक्षं ताभ्यां तत्रैवरक्षितम् ।
सद्योजातो वामदेवस्तत्पूर्षोऽघोर एव च ।।

ईशानस्तत्र चान्तर्हि प्राकारपरिरक्षकः ।
स्वगणैस्तादृशैरेव प्रत्येकं लक्षसङ्ख्यया ।। ३९ ।।

स्वनाम्ना स्थाप्य लिङ्गानि दिव्यधामगतानि ते ।
सदाऽपचितिभिस्तत्र पूजयन्ति विलोकय ।। ४० ।।

तन्मौलिकुम्भजालानि वीक्ष्य तच्च नमस्कुरु ।
एवं तत्रान्तरेऽप्यन्याः पञ्चविंशतिमूर्तयः ।। ४१ ।।

पञ्चपञ्चोत्तरास्तत्र प्राकारपरिरक्षकाः ।
स्वनाम्ना स्थाप्य लिङ्गानि कैलासामलपर्वते ।। ४२ ।।

तत्रान्तरे महादेव्या वसतिः शिवकल्पिता ।
नास्माकं प्रसरस्तत्र नानामणिगृहान्तरे ।। ४३ ।।

सख्यस्तस्या महादेव्याः सञ्चरन्ति निरीक्ष्यताम् ।
तत्र लिङ्गोरुसद्मानि मणिकुम्भोज्ज्वलानि च ।। ४४ ।।

रुद्राण्यः पूजयन्त्येव तत्र लिङ्गायुतं नग ।
तत्रान्तरे महेशस्य मण्टपानां चतुष्टयम् ।। ४५ ।।

ललामराजद्वृषभं मणिकुम्भोज्जवलच्छ्रियम् ।
तत्र देव्या महादेवो विहरत्येव निश्चितम् ।। ४६ ।।

**स्कन्दः (उवाच)**

इत्थं नन्दीशवाक्येन सन्तुष्टः प्राह भूधरः ।
समुद्यत्पुलकः सास्रो धन्यं मेने दृशोर्द्वयम् ।। ४७ ।।

हिमवान् (उवाच)

कैलासलिङ्गवरलिङ्गसुरत्नधाम-
कान्तोरुकुम्भकलनेन नयामि जन्म ।
अत्रैव वासमभिरोचयते मनो मे
सत्यं ब्रवीमि गणपेन्द्र नमो नमस्ते ।। ४८ ।।

धन्ये मे नयने तनुश्चसफला धन्यो गिरीन्द्रोऽप्ययं
यस्यापार शिखाश्रयो हि भगवाँल्लिङ्गाकृतिः शङ्करः ।
प्राकारेषु च गोपुरेषु विपिने रुद्रावतारः प्रभु-
श्चस्ते सौधवरेषु देवतिलकः कस्तस्य वृङ्क्ते गुणान् ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे हिमवतः कैलासदर्शनं नाम
त्र्योविंशोऽध्यायः ।।



## ।। चतुर्विंशोऽध्यायः ।।

नन्दिकेश्वरः (उवाच)

प्राच्यां पश्य नगश्रेष्ठ श्रेष्ठोऽयं धरणीधरः ।
निष्टप्तकनकाकारो नानासुरवराश्रयः ।। १ ।।

सहस्रशिखरापार कान्तिकाञ्चितदिक्तटः ।
वृषस्तम्भनिभो भाति कैलासाग्रे नगोत्तमः ।। २ ।।

पश्य तान् परिखाकारान्त्समुद्रान्त्सनदीनदान् ।
पश्य द्वीपान्महाशैल समुद्रेषु विशेषतः ।। ३ ।।

विपिनावनिजातानां प्रासादानां च मौलयः ।
प्रोद्यत्पताका राजन्ति नगिकुम्भाग्रशोभिताः ।। ४ ।।

एष नीलस्तथा विन्ध्यो मन्दरो दर्दरो नगः ।
सुमाली केतुमालश्च भद्राश्वौ तत्रवार्षकौ ।। ५ ।।

रैवतः शतश्रृङ्गश्च मणिबभ्रुश्च पिङ्गलः ।
उदयश्चक्रवालश्च मैनाकोऽयं मधुर्गिरिः ।। ६ ।।

अस्ताचलः पारियात्रो निषधः कुन्तलाचलः ।
तव मूर्तिरियं शैली मौलिकेदारलिङ्गतः ।। ७ ।।

त्वमत्यन्तमहाश्रृङ्गैरुपेतोऽसि महानग ।
त्वत्तो मानुषगङ्गेयं निर्गता लिङ्गरङ्गिता ।। ८ ।।

भगीरथस्य तपसा प्लावयन्ती च भूतलम् ।
अन्या विक्रमतो विष्णोः पादतो निर्गता नग ।। ९ ।।

गङ्गाद्वारात्प्रतीच्यब्धिं सङ्गता मालवानियम् ।
इयं गर्वभराक्रान्ता ईशेन शशिमौलिना ।। १० ।।

जटाकोटीरनिलयां चक्रे सा च विसर्जिता ।
देवैः संप्रार्थितो देवस्तां भूमौ परिमुक्तवान् ।। ११ ।।

आनन्दकाननं प्राप्ता चक्रतीर्थे सरिद्वरा ।
तत्तीरे पश्य सुभगं विश्वेशशिखरं महत् ।। १२ ।।

भारते भूमिसर्वस्वखण्डे वै जाह्नवी यतः ।
अविमुक्तं प्रपश्याद्य मृता यत्रापुनर्भवाः ।। १३ ।।

विमुक्तिं दास्यते देवो यत्र विश्वेश्वरः स्वयम् ।
तत्पश्चात्सागरप्रान्ते कुरुक्षेत्रं प्रभासकम् ।। १४ ।।

रुद्रकोटिः पुष्करं च गङ्गाद्वारं पवित्रकम् ।
पिण्डालकं कालजरं तापितीरे मनोहरम् ।। १५ ।।

यत्र पाशुपतो योगी मुनीनां चोपदेशिता ।
देवदेवेन तत्रैव पश्यैतन्मणिकुम्भकम् ।। १६ ।।

श्रीशैलशिखरं पश्य पश्य त्र्यम्बकभूधरम् ।
क्षिप्रातीरमहाकालं कामदं वैद्यनायकम् ।। १७ ।।

पश्चात्तथोत्तराश्चेमे कुरवः पश्य भूधर ।
ताम्रवर्णमयी भूमिस्तत्र द्वीपे घृतोदधौ ।। १८ ।।

स हि किम्पुरुषावासः पुरुषास्तुरगाननाः ।
शिलानदीमिमां पश्य तत्प्रान्ते काकवक्त्रका ।। १९ ।।

पुरुषाणां प्रवेशोऽत्र तावदेव नगोत्तमा ।
मरुभूमिस्ततो द्वीपौ शाकक्रौञ्चौ मनोरमौ ।। २० ।।

कुशकाशौ ततः प्राच्यां क्षीरोदेनावृतौ नग ।
देवभूमिस्ततो रम्या दध्योदे परिकल्पिता ।। २१ ।।

चक्रवालो गिरिः प्राच्यां तत्प्राच्यामुदयाचलः ।
पश्चादपि प्रपश्येमां भूमिं स्वादूदधीवृताम् ।। २२ ।।

स्वर्णारं पश्य सुभगं वरुणावासमुत्तमम् ।
शोणो नाम नदो विप्र प्रतीच्यां वहते नग ।। २३ ।।

रम्यसालवनप्रान्ते गन्धर्वाणां प्रमोदभूः ।
अस्ताचलावधि नग तत्प्रान्ते शाल्मली द्विपः[1] ।। २४ ।।

दक्षिणे भारते वर्षे जम्बूनाम नदी तदा ।
यात्येव वियतं तस्या द्वीपं जाम्बूनदं स्मृतम् ।। २५ ।।

देवभोग्यं महाशैल निष्टप्तकनकं हि तत् ।
प्रतिष्ठानपुरं पश्य करहट्टपुरं तथा ।। २६ ।।

करवीरपुरीं चापि पश्य विन्ध्यनिवासिनीम् ।
पश्य वेणुवनं पुण्यं नागनाथशिवालयम् ।। २७ ।।

ओङ्कारं नर्मदातीरे कुण्डंचोङ्कारनामकम् ।
आवण्टकमिदं पश्य पश्य तद्धुसृणीश्वरम् ।। २८ ।।

नैमिशं पश्य विपुलं विशालं बदरीमनु ।
गोदां च नर्मदां चैव बाहुदां कृष्णवेणिकाम् ।। २९ ।।

---

1. द्वीप इत्यर्थे ।

नीरां पयोष्णीं पश्याग नीरजावलिभासुराम् ।
कालिन्दी गङ्गया युक्ता यत्र वेदी प्रजापतेः ।। ३० ।।

प्रयागवनमेतद्वै चित्रकूटगिरिस्ततः ।
शूले काश्यालयं पश्य गयां च पितृतृप्तिदाम् ।। ३१ ।।

सोमेश्वरालयं शैल पश्यायोध्यां महापुरीम् ।
सुधेश्वरालयं पश्य सरयूतीरसङ्गतम् ।। ३२ ।।

पश्चात्कोकामुखं पश्य गङ्गां पश्याब्धिसङ्गताम् ।
कामोदकमिदं पश्य पश्य कोङ्कणभूतलम् ।। ३३ ।।

पश्चिमाम्भोधिकोणे च पश्य गोकर्णमुत्तमम् ।
रम्यं शेषाचलं पश्य स्कन्दो यत्र प्रतिष्ठितः ।। ३४ ।।

श्रीमद्दक्षिणकैलासशिखरं पश्य भूधरम् ।
पश्य काञ्चीं च विपुलांमेकाम्रशिखरं नग ।। ३५ ।।

पश्यारुणाद्रिशिखरं स्मरणात्पापनाशनम् ।
वृद्धाचलाद्रिं पश्याद्रे रम्यामभ्रसभां दृशा ।। ३६ ।।

पश्य नर्तनमीशस्य देवदेवस्य धूर्जटेः ।
गोपर्वतं तत्र पुण्यं शिवमार्गसहायकम् ।। ३७ ।।

सह्याद्रिं पश्य तुङ्गाग्रे यतो जाता कवेरजा ।
पुण्यं श्रीकण्ठशिखरं ततो रत्नगिरीश्वरम् ।। ३८ ।।

---

1. शूलटङ्कालयं पश्येति पाठान्तरम् ।। शेषाचलस्य इदानीं श्रीनिवासालयत्वेन ख्यातस्य, स्कन्दावासत्ववर्णमं अधिकृत्य विद्वद्भिः परामर्शः कार्यः ।।

तृणज्योतीशशिखरं मातृभूताद्रिरेष वै ।
तद्दक्षिणे द्वादशान्तं ततो वेणुवनं नग ।। ३९ ।।

महेन्द्रशिखरं पश्य दक्षिणाम्भोनिधौ स्थितम् ।
ताम्रपर्णी तत्र नदी कृतमाला च वेगिनी ।। ४० ।।

कन्यातीर्थं ततः प्राच्यां पश्य चाद्रे शुचीश्वरम् ।
गन्धमादनशैलेशशिखरं पश्य भूधर ।। ४१ ।।

गजारण्यं ततोदीच्यां ततः पञ्चनदाह्वयम् ।
कुम्भेशशिखरं पश्य पश्य मध्यार्जुनाभिधम् ।। ४२ ।।

त्रिकोटिमङ्गलं पश्य मायूरं श्वेतकाननम् ।
सङ्गतां सिन्धुना पश्य सह्यजां पुण्यनिम्नगाम् ।। ४३ ।।

वाञ्छेश्वरं छायावनं पुण्यं तत्तेजिनीवनम् ।
वटेश्वरं तत्र पश्य यत्र कालोहतः पुरा ।। ४४ ।।

श्रीमहेशेन पुण्याद्रे मृकण्डुतनयावने ।
ब्रह्मेशं चैव वैद्येशं तञ्जेशं तत्प्रतीच्यके ।। ४५ ।।

कमलालय संज्ञं च तथैवान्ये शिवालयाः ।
श्रुतिकाननमीक्षस्व वेदतीर्थस्तथाब्धिराट् ।। ४६ ।।

कावेरीतीरतोद्भासिलिङ्गधामानि लोकय ।
भारतं खण्डमतुलं पश्य तल्लिङ्गमण्डलम् ।। ४७ ।।

प्राक्पश्चाद्दक्षिणे चापि भूधरेन्द तथोत्तरे ।
ब्रह्माण्डभित्तिरेवात्र खण्डान्यपि विलोकय ।। ४८ ।।

शिवाज्ञया मया शैल दर्शितोऽयं नगोत्तमः ।
पुण्योऽयं रमणीयोऽयं कैलासः शङ्करालयः ।। ४९ ।।

भद्राश्वकेतुमालं च प्राच्यामीक्षस्व सन्नग ।
पश्चाद्धरिश्च किम्पूर्षः खण्डे द्वे सागरावृते ।। ५० ।।

देवभूमिरियं पश्य सुरकिन्नरहर्षदा ।
तत्रोत्तरे मन्दरो हि शम्भोरानन्दवासभूः ।। ५१ ।।

इलावृतो मणीवर्षो भारतो दक्षिणे नग ।
कल्पितास्ते महेशेन वर्षाश्च कुलपर्वताः ।। ५२ ।।

**नन्दीश्वरः (उवाच)**

इत्येव ते समासेन कथितो विस्तरः क्रमात् ।

**स्कन्तः (उवाच)**

श्रुत्वाऽध्यायमिमं पुण्यं कैलासे गणपो भवेत् ।। ५३ ।।

तस्य तद्वचनं श्रुत्वा हृष्टरोमा महीधरः ।
प्रोवाच नन्दिनं वीक्ष्य जातहर्षो मुनीश्वर ।। ५४ ।।

**नगेन्द्रः (उवाच)**

धन्यस्त्वं त्रिपुरारिपादकमल ध्यानानुरागादरः
किं तत्तुल्यगुणं वदामि वचसा को वेद शम्भोर्गुणान् ।
चारित्रं विविधाण्डकोटिघटने पाण्डित्यमप्यन्ततः
वेदा वा विधयोऽपि वा हरिहरा जानन्ति नो वाप्यणु ।।

किं वक्तव्यमुमासहायचरणाम्भोजप्रभाभावतो-
ह्यानन्दाम्बुधिमग्नसर्वहृदयो जाने न क्रिञ्चित्प्रिये ।

अत्रत्यामललिङ्गसौधकुलकं किं वा मयान्यत्प्रियं
शम्भोः पादपरागराञ्जितमनाः कालं नयामि क्षणात् ।।

त्वं नन्दिन् गणपोत्तमोऽसि भगवन् क्षेमास्पदो मे सखा
इत्युक्त्वा हिमवान् शिलादतनयं चालिङ्ग्य बाष्पाकुलः ।
मैनाकेन च मेनया शशिशिलागारस्थलिङ्गोत्तमम्
कृत्वार्चादिभरैरपारविभवैस्तुष्टाव शम्भुं तदा ।। ५७ ।।

**स्कन्द उवाच**

शम्भौ निश्चलमानसोऽप्यगकुलश्रेष्ठो हिमाद्रीश्वरो
भक्त्याराधितवान् सुबिल्वविपिनोद्भूतैः सुमैस्तत्फलैः ।
वर्षाणां दशकं महेश्वरदयासारप्रभावाधिकः ।। ५८ ।।

**हिमवान्**

शशिधर गरधर मारहराव्यय शम्भो
गुणगणनातीत गुणप्रकृष्ट देव ।
तव लिङ्गसुपूजनान्मनो मे
न कदान्यत्रगतीषु भावयामि ।। ५९ ।।

**सूतः उवाच**

तस्मै चापि वरं ददौ पशुपतिर्भक्त्येकनिष्ठाय ते
कामान्पूरयिताऽस्मि वैभववते तद्वाञ्छतां मत्पुरः ।
इत्युक्तो गिरिराट् तदा हरगिरं श्रुत्वाह भक्त्या शिवम् ।।

देव्यास्ते भवने निवासमतुलं दूर्वासवाक्यं शिवे
भक्तिं चापि भवाङ्घ्रि पङ्कजभरां संसारमुक्तिप्रदाम् ।।

**नन्दिकेशः**

धन्यः केदारलिङ्गोत्तममिलितशिराश्चाश्रयस्त्वं मुनीनां
त्वन्मौलौ वसतां तपः फलमहो दातुं प्रवृत्तो हरः ।
किञ्चाम्बाजनको ह्युदारचरितो वृद्धःकुलाधीश्वरः
कस्ते तुल्यनगो यतो नगवरे लिङ्गप्रतिष्ठार्चकः ।। ६२

विमानवर्येण नगेन्द्रमिष्टं
तुष्टं प्रकृष्टं शिवलिङ्गसमर्चनेन ।
निनाय शम्भोः सविधं गंणेन्द्रो
हृष्टो गिरिश्चेति उवाच प्राञ्जलिः ।। ६३ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे कैलासदर्शनं नाम चतुर्विंशोऽध्यायः ।।



## ।। पञ्चविंशोऽध्यायः ।।

**स्कन्द उवाच**

ततो हिमाद्रिदेवेशं कैलासामलसौधगम् ।
पार्वत्या सहितं शम्भुं दिव्यसिह्मासने स्थितम् ।। १ ।।

चतुर्भुजमुदाराङ्गं सर्वरत्नविभूषितम् ।
किरीटकोटिगोद्भासि चन्द्रार्धकृतशेखरम् ।। २ ।।

कुण्डलायितकर्णोद्यत्कुण्डलीफणिभूषणम् ।
नवरत्नाङ्गदलसत्कङ्कणाङ्गदमुद्रितम् ।। ३ ।।

सोमधामसमानास्यं तपनानललोचनम् ।
धृतत्रिपुण्ड्ररचनातदधस्तिलकोज्ज्वलम् ।। ४ ।।

उत्फुल्लरक्तकमलरत्नमालाधरं विभुम् ।
दिव्यचन्दनलिप्ताङ्गं दिव्यपुष्पार्चिताङ्घ्रिकम् ।। ५ ।।

धूपितं परितो धूपैस्तगरागरुसम्भवैः ।
शुद्धाम्बरधरं सौम्यं पश्यन्तमनिशं शिवाम् ।। ६ ।।

मणिहर्म्यच्छविप्रोद्यद्दीप्तकैलासपर्वतम् ।
वामाङ्कसन्निविष्टाम्बावदनस्मितकान्तिभिः ।। ७ ।।

धावल्यतरनिर्यच्छ्री[1]देव्यङ्गप्रभया ततम् ।
नम्राननां महादेवीं शिवाङ्कस्थां महेश्वरीम् ।। ८ ।।

---

1. देवाङ्गेति पाठान्तरम् ।।

भस्मत्रिपुण्ड्रनिटिलां कस्तूरीतिलकोज्ज्वलाम् ।
बिम्बाधरां प्रसन्नास्यलसन्नासाग्रमौक्तिकाम् ।। ९

मुकुटोद्भासिचन्द्राङ्कां कचबद्धसुमल्लिकाम् ।
तपनोडुपविभ्राजिताटङ्कयुगलश्रियम् ।। १० ।।

मणिहीराच्छपदकलसद्ग्रीवां मनोहराम् ।
कनकाङ्गदकेयूरनागबन्धविराजिताम् ।। ११ ।।

कस्तूरीरसपाटीरचन्द्रचन्दनचर्चिताम् ।
ताम्बूलपूरितमुखीं तिर्यग्लोचनकोटितः ।। १२ ।।

पश्यन्तीं वदनाम्भोजं शम्भोः सुन्दरमेदुरम् ।
सुरम्यपादकमलं मुक्तामज्जीरशोभितम् ।। १३ ।।

देवीसखीभिश्च वृतं गणेन्द्रैश्च महेश्वरम् ।
मया च गणपेनापि धृतचामरवीजितम् ।। १४ ।।

छत्रैः पताकानिचयधारिभिर्गणपुङ्गवैः ।
जयन्ती विजयाहस्तधृतचामरवीजिताम् ।। १५ ।।

रम्यच्छत्रावृतमुखीं दण्डिन्यादर्शहस्तया ।
बालया वीटिकामत्स्यपेटीविधृतया तदा ।। १६ ।।

मन्त्रिण्या खड्गकोशोद्यत्करया सेविता शिवा ।
तण्डुहस्ते महाशूलं खड्गकोशं च दण्डिना ।। १७ ।।

भैरवोद्भावित महानिषङ्गवरकार्मुके ।
कालाग्निरुद्रो मायूरव्यजनेनाप्यवीजयत् ।। १८ ।।

एवं गणवृतं देवं देव्या सिंहासने स्थितम् ।
दृष्ट्वा प्रणम्य नन्दीशो गिरिदेवं व्यजिज्ञपत् ।। १९ ।।

प्रवेशयेत्यन्वशाच्च देवदेवो महेश्वरः ।
प्राञ्जलिः सत्वरं गत्वा ततोऽग्रे हिमभूधरम् ।। २० ।।

दृष्ट्वाऽऽयान्तं समैनाकं दत्तहस्तं च नन्दिना ।
गौरीगुरुं महाशैलं जातहर्षं तदा नगम् ।। २१ ।।

प्रावेशयच्च सविधं शम्भोर्देव्या गणाग्रणीः ।
दृष्ट्वा देवं महादेवं स नगो हर्षनिर्भरः ।। २२ ।।

प्रणम्य प्राञ्जलिर्विप्रा मम मातामहोऽद्रिराट् ।
अगजापतिमाशास्यं तुष्टाव पुलकाङ्गकः ।। २३ ।।

**हिमवान् (उवाच)**

भव हर भगवन् पुरान्तकारे
प्रमथाधीश हरीन्द्र रुद्र पूज्य ।
विबुधाधिप सर्वमङ्गलाधिनाथ
हर गरकन्धर सोमचन्द्रचूड ।। २४ ।।

अहिवरवरहारशोभिताङ्ग
अगपतिवास महोरुलिङ्गवास ।
खगपतिवहनेत्रपूज्यपादशम्भो
[1]विधिमस्ताभरण प्रसीद देवदेव ।। २५ ।।

बलिबलमथन प्रमाथ शम्भो
गिरिजानाथ सनाथ पाहि माम् ।
मथनोद्भूतसमुद्रमध्यतोद्य-
द्गरहारिन् प्रमथैकनाथ पाहि ।। २६ ।।

---

1. ब्रह्मकपालमालाधरेत्यर्थे

धृतगङ्गामलचन्द्रसत्कपर्द
निगमोत्तंसविशेषवासतुष्ट ।
भवभावहृदन्तरायनाश
गिरिकैलासनिवास पाहि शम्भो ।। २७ ।।

गजमुखषण्मुख सन्मुखशङ्कर
चित्सुख कमलजमुखमौले ।
शशिमुखिलोकन पञ्चमुखोद्यत-
लोचन लेखवरोत्तम पाहि ।। २८ ।।

अव शिव सदयं भव भव हृदयं
कुरु कुरु करुणां शशिमौले ।
वितर विमुक्तिं परिहर बन्धं
स्मरहर यमहर भगहर शम्भो ।। २९ ।।

अव पदकमले विदिश सुभक्तिं
तव लिङ्गार्चनतः प्रकृष्टभावम् ।
तव पदकमलासनं च शम्भो
मम सन्मानसमेतदद्य चास्तु ।। ३० ।।

तव लिङ्गामललोकनेऽस्तु नेत्रे
तव पादप्रणतौ शिरोऽपि मेऽद्य ।
तव लिङ्गोत्तम पूजनाय हस्तौ
तव लिङ्गालयप्रक्रमाय पादौ ।। ३१ ।।

शशधरधर हर रथधर हरपुर-
हर शङ्कर गरधर शम्भो ।

जलधर वह नगधर शूलधराव्यय
[1]हरिभस्मारुणधर पाहि ।। ३२ ।।

**सूतः (उवाच)**

तत्स्तुत्या तोषितः शम्भुस्तमभ्यर्णे नगाधिपम् ।
एहीत्यवोचत्कृपया स्वागतेनाभ्यनन्दयत् ।। ३३ ।।

**ईश्वरः (उवाच)**

दृष्टः कैलासशैलो मे त्वया नगवरोत्तम ।
दृष्टानि शिवलिङ्गानि सर्वपापहराण्यग ।। ३४ ।।

कोट्यर्बुदानि लिङ्गानि गोपुराण्यत्र सत्तम ।
प्रासादवरसौधाश्च किं दृष्टा मण्टपावलिः ।। ३५ ।।

सरांसि रत्नकमलभ्राजिष्ण्वन्ति नगोत्तम ।
रत्नानां गिरयोऽप्यद्रे तन्मौलिमणिमण्टपाः ।। ३६ ।।

कैलासेश्वरलिङ्गं मे दृष्टं मुक्तिप्रदायकम् ।
अम्बिकेशं सदाम्बाया हृदयागारसंस्थितम् ।। ३७ ।।

गणानां भवनान्यत्र किं दृष्टानि त्वयाद्रिप ।
महावनानि पुष्पोद्यत्सुरभीणि समन्ततः ।। ३८ ।

सहस्रलिङ्गधामोद्यत्कलशाली सुपुण्यदा ।
क्रीडारत्नमहासौधपङ्क्तिर्दृष्टा त्वयानघ ।। ३९ ।।

रम्यं बिल्ववनं दृष्टं मणिलिङ्गोरुमूलकम् ।
पुण्याश्चात्र सभदृष्टाः सेयं मे नर्तनस्थली ।। ४० ।।

---

1. हरि = रक्तचन्दनम् ।

सहस्त्रायुतलक्षोद्यत्कोटिस्तम्भोरुमण्टपाः ।
त्वया दृष्टा नगश्रेष्ठ सागरा मेरुपर्वतः ।। ४१ ।।

शैलप्राकारराजश्री गोपुरालिवृषावली ।
दृष्टं भुवनगोलं ते शिवक्षेत्राण्यपि क्रमात् ।। ४२ ।।

धन्यस्त्वं नगमूर्धन्य धन्यः कैलासदर्शकः ।
कैलासदर्शनेनाद्य सफलं ते जनुर्नग ।। ४३ ।।

विष्णुब्रह्मादयो देवास्तथान्ये मुनयो गणाः ।
कैलासदर्शनार्थाय तप्यन्त्यद्यापि ते तपः ।। ४४ ।।

किं ममैवानुग्रहेण मत्कैलासस्य दर्शनम् ।
महादानैश्च विविधैः षोडशैश्च नगोत्तम ।। ४५ ।।

मम कैलासभवनदर्शनं नैव जायते ।
अष्टाङ्गयोगैर्विविधैर्नियमादियमासनैः ।। ४६ ।।

मम कैलासभवनदर्शनं नैव जायते ।
गवां कोटिप्रदानेन अश्वमातङ्गकोटिभिः ।। ४७ ।।

मम कैलासभवनदर्शनं नैव जायते ।
धनधान्यमणीनां च वस्त्राभरणदानतः ।। ४९

मम कैलासभवनदर्शनं नैव जायते ।
तीर्थप्रक्रमकन्यान्नदानैश्च गृहदानतः ।। ५० ।।

मम कैलासभवनदर्शनं नैव जायते ।
पानीयधूपदीपादिदानेनापि तपस्विषु ।। ५१ ।।

मम कैलासभवनदर्शनं नैव जायते ।
वेदवेदान्तवादैश्च वर्णाश्रमरतात्मनाम् ।। ५२ ।।

मम कैलासभवनदर्शनं नैव जायते ।
किन्तु प्रसादेन मम भक्त्या चैवाप्यनन्यया ।। ५३ ।।

लभ्यते दर्शनं शैल मम कैलासमौलिगम् ।
अनन्यभावः सततं भस्मपुण्ड्रोज्ज्वलोऽनिशम् ।। ५४ ।।

रुद्राक्षहारवलयः पञ्चाक्षरपरायणः ।
रुद्रलिङ्गार्चनपरो रुद्राध्यायजपादरः ।। ५५ ।।

शिवक्षेत्रैकवसतिस्तेन लभ्योऽयमद्रिराट् ।
किमुक्तेनापि बहुना लभ्योऽयं मदनुग्रहात् ।। ५६ ।।

न देवो नैव गन्धर्वा ब्रह्मविष्णुमहेश्वराः
मनसा तैरचिन्त्योऽयं कैलासो मम भूधरः ।। ५७ ।।

**ईश्वरः**

मद्भक्त्या जगति प्रचण्डसुरतासन्ताडने पण्डिताः ।। ५८

भद्राद्या सिकताशनादितनया चण्डांशुपुत्रादयः
चण्डीशः पितरं निनाय च यमं श्वेतोऽपि जिग्येऽन्तकम् ।
मार्कण्डेयदधीचिगौतममुखा विष्णुर्यमश्चन्द्रमा-
श्चाजौ ते जयशालिनो मम महालिङ्गार्चनादेव ते ।। ५९

।। इति श्रीशिवरहस्ये द्वितीयांशे शिववाक्यं नाम पञ्चविंशोऽध्यायः ।।



## ।। षड्विंशोऽध्यायः ।।

**स्कन्दः (उवाच)**

नन्दी विज्ञापयामास श्रुत्वा शम्भोर्वचस्तदा ।
प्रणम्य विनयोपेतः प्राञ्जलिः करुणानिधिः ।। १ ।।

**नन्दी (उवाच)**

धन्यो मान्योऽयमचलो दययेश तवामलः ।
ब्रह्मविष्ण्वादिभिर्देवैर्नैव तैर्गिरिरीक्षितः ।। २ ।।

न तपोभिरपि प्राप्यः कैलासो नगसत्तमः ।
त्वत्कृपासारवलनैः नगो नेत्रातिथिः कृतः ।। ३ ।।

तव प्रमोदरसभृद्धरणीभृदयं शिव ।
दर्शनेनाद्य विवशः कैलासधरणीभृतः ।। ४ ।।

तवापारमहाधाम्नि कैलासवरमौक्तिके ।
अनेन पर्वतेन्द्रेण विहितोऽत्र शिवालयः ।। ५ ।।

शशिधामशिलाक्लृप्तः प्राकारवरगोपुरः ।
हिमाचलेश्वरं नाम लिङ्गं प्रातिष्ठिपन्नगः ।। ६ ।।

पञ्चामृतनिषेकैश्च चन्दनैर्बिल्वपूजनैः ।
धूपदीपैश्च नैवेद्यस्ताम्बूलच्छत्रचामरैः ।। ७ ।।

वाद्यसङ्घारवैश्चैतैरनन्योऽपूजयन्नगः ।
मैनाकेन च लिङ्गं ते सुमौलौ शशिधामजम् ।। ८ ।।

तेन स्तुतं महादेव तत्स्तुतिं श्रृणु शङ्कर ।। ९ ।।

उमासहाय[1] उरगाय भवादि
पापाद्विहाय गुणरूप विहामकाय ।
दग्धान्धकत्रिपुरमन्मथकाय शम्भो
मायामयादि जनतासु च मोचयाव ।। १० ।।

नन्दितस्तत्स्तुतिं श्रुत्वा सन्तुष्टो नितरां हरः ।
तमभ्युवाच हृष्टात्मा स्वलिङ्गार्चनतः शिवः ।। ११ ।।

लिङ्गप्रतिष्ठया तुष्टो ह्यष्टमूर्तिरुवाच तम् ।

**ईश्वरः (उवाच)**

धन्यस्त्वं मम कैलासे मल्लिङ्गालयकल्पगः ।
प्रतिष्ठितं येन लिङ्गं तेन सर्वमनुष्ठितम् ।। १२ ।।

तेन यागाः कृताः सम्यग्दक्षिणान्तादिभिः सह ।
तपांसि तेन तप्तानि कृच्छ्रचान्द्रायणादिभिः ।। १३ ।।

त्रैलोक्यं तेन भूपृष्ठे भूधरेश प्रतिष्ठितम् ।
वने पुरे वा ग्रामे वा पर्वते वा सरित्तटे ।। १४ ।।

गङ्गातीरे कोटिगुणं ततो (ततः) कोटिगुणं नग ।
किम्पुनर्मम कैलासे विष्णुब्रह्मादिदुर्लभे ।। १५ ।।

धन्यस्त्वं मम हृत्पद्मसद्मगोऽसि नगोत्तम ।
तवादेयं किमस्त्यत्र त्वमेवाहं न संशयः ।। १६ ।।

त्वमेवाचरमूर्तिर्मे यतो लिङ्गवराश्रयः ।
केदारेश्वरलिङ्गं ते यतस्ते मौलिसंस्थितम् ।। १७ ।।

---

1. उमासहाय उरुकाय भवादिभाव पापाद्विहाय गुणरूप विहीनकाय ।।

तल्लिङ्गदर्शनादेव मुक्तिसाम्राज्यमस्तु ते ।
देवैश्चमुनिभिश्चैव गणेन्द्रैरपि भूधर ।। १८ ।।

तव मौलौ तपस्तप्तं केदारेश्वरपूजकैः ।
तपस्स्थानं महोत्कृष्टं तव मौलिर्नगोत्तम ।। १९ ।।

धन्यस्त्वं सर्वमान्योऽसि त्वत्तो जातेयमम्बिका ।
ममैषा परमामूर्तिरियं शक्तिः सदा मम ।। २० ।।

यस्याः कटाक्षलेशेन जगदेतच्चराचरम् ।
यस्याः पादाम्बुजद्वन्द्वदर्शनेन सुरासुराः ।। २१ ।।

निवृत्ताः परमां मुक्तिं लभन्ते मत्प्रसादतः ।
मा विचारय शैलेन्द्र वरं मत्तोऽभिकाङ्क्षय ।। २२ ।।

प्रसन्नोऽसि नगश्रेष्ठ मम लिङ्गप्रतिष्ठया ।
कैलासमौलौ शैलेन्द्र मुक्तोऽसि मम पूजया ।। २३ ।।

हिमवाञ्छङ्कराच्छ्रुत्वा वचनं चातिहर्षितः ।
मौलौ कराञ्जलिं कृत्वा प्रणम्य परमेश्वरम् ।। २४ ।।

प्राहानन्दाश्रुधारोद्यत्पुलकाङ्गो महीधरः ।

**हिमवान्**

किमन्येन वरेणेश यतो दृष्टं पदाम्बुजम् ।। २५ ।।

तवाद्य देवदेवस्य धन्योऽस्मि नगसङ्घके ।
तपसा मे न शक्यं ते कैलासस्यास्य दर्शनम् ।। २६ ।।

लिङ्गसौधाश्च विविधा मौलिकुम्भपताकका: ।
दृष्टा धन्येन सुदृशा कैलासे सोऽपिवीक्षितः ।। २७ ।।

अम्बिकेशो मया दृष्टो देवीशोऽपि स्तुतो मया ।
स्कन्देशश्च गणेशश्च मयैक्षि कुमुदेश्वरः ।। २८ ।।

सभाश्चापि मया दृष्टा गोपुराण्यपि ते विभो ।
प्राकाराः परिखाकाराः सागराश्च तथाद्रयः ।। २९ ।।

मण्टपावलिसङ्घश्च मम नेत्रातिथिः कृतः ।
किं मुक्त्या मम देवेश देव्या दर्शनतो मम ।। ३० ।।

तव पादाम्बुजद्वन्द्वे भक्तिरस्तु ममाचला ।
अचलस्यापि मे देव अचलं मे मनस्त्वयि ।। ३१ ।।

देव्याः प्रसादतो मेना पश्यन्ती तव हृन्नगम् ।
विस्मयानन्दहृदया मैनाकोऽप्ययमीश्वर ।। ३२ ।।

देव्याश्चिरसहावासात्तव कैलासपर्वते ।
देवीपदाम्बुजद्वन्द्वं किञ्चित्कालं मयि प्रभो ।। ३३ ।।

मौलौ विदधतां मेऽद्य मम देवी प्रसादतः ।
त्वत्प्रसादात्सनाथं मां कुर्वन्ती परमेश्वरी ।। ३४ ।।

केदारेशं महालिङ्गं मम मौलिस्थितं शिवा ।
समर्चयतु देवीयं किञ्चित्कालं सहोषिता ।। ३५ ।।

मेनया रमतामीशा लोकयात्रेयमीदृशी ।
दुर्वासापि[1] महायोगी तपस्यति सुदारुणम् ।। ३६ ।।

मुनिभिः शैववर्यैश्च भस्मरुद्राक्षभूषणः ।
भस्मशायी रुद्रजापी केदारेशार्चने रतः ।। ३७ ।।

---

1. दुर्वासाश्च ।

त्रिकालं बिल्वपत्रैश्च तव भक्त्याप्यनन्यधीः ।
अनुगृह्णीष्व तमनु मम मौलिकृतास्पदम् ।। ३८ ।।

इत्युक्तं गिरिशेनेदं गिरीशो भक्तवत्सलः ।
प्राह देवीं महादेवः वीक्ष्यं तं हिमभूधरम् ।। ३९ ।।

**शिवः**

एवं प्रार्थयते शैलस्तवागमनमुत्तमम् ।
स्वमौलिधामलिङ्गं च केदारेशं च वीक्षितुम् ।। ४० ।।

मदाज्ञयैव दुर्वासास्तपस्तप्यति तत्र हि ।
धन्यं कुरु नगश्रेष्ठं मेनां मैनाकमीश्वरि ।। ४१ ।।

गच्छ लग्ने शुभे देवि विमानेनार्करोचिषा ।
गणेशैश्च नगैश्चैव सेविता नगसद्म तत् ।। ४२ ।।

दुर्वाससं मुनिवरमनुगृह्यार्चयेश्वरम् ।
केदारेशं तव पितुर्वरमौलिसमाश्रयम् ।। ४३ ।।

विगाह्य तत्र गङ्गां च त्वत्पितुर्मौलिगा सुखम् ।
विहरस्वाद्य देवेशि मेनया पूजिता शिवे ।। ४४ ।।

एकांशेन वसात्रैव मम पार्श्वे सनातनि ।
विचित्रशक्ते देवेशि त्वत्पितुर्हर्षदायिनि ।। ४५ ।।

किञ्चित्कालं विहृत्येशि पुनरागच्छ सत्तमे ।
इत्युक्तं श्रीमहेशेन प्राह भूधरकन्यका ।। ४६ ।।

देव्युवाच

मनोरथोऽयमतुलो मम मेनासुहर्षदः ।
पश्यामि शिखरं देव पितुर्मम सुरेश्वर ।। ४७ ।।

केदारलिङ्गपूजां च कुर्वेऽहं भक्तिभाविता ।
दुर्वासास्तव भक्तोऽयं किमर्थं तप्तवांस्तपः ।। ४८ ।।

तदाचक्ष्व महादेव श्रवणे कौतुकं मम ।
दयया भगवन्ब्रूहि मम तत्तपसो विधिम् ।। ४९ ।।

स्कन्द उवाच

इत्यम्बावचनेन सुन्दरगिरा प्रोवाच विश्वेश्वरः
देवीं वीक्ष्य मुदा तदा गिरिवरं दृष्ट्वा गणेन्द्रानपि ।
मां चैवाथ गजाननं प्रकटया दुर्वाससस्तत्तपः
स्वस्याज्ञाकरणेन विश्वविनतो देवीं बभाण प्रभुः ।। ५० ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे शिववाक्यं नाम षड्विंशोऽध्यायः ।।



## ।। सप्तविंशोऽध्यायः ।।

**ईश्वर उवाच**

कथामाकर्णयापर्णे दुर्वासात्र पुरा मुनिः[1] ।
तेन तप्तं तपो घोरं वर्षाणामयुतं शिवे ।। १ ।।

वर्षमेकं निराहारो वर्षमात्रावकाशकः ।
वर्षं स जलमध्यस्थो जपन्रुद्रमनन्यधीः ।। २ ।।

पर्णाशी वर्षमेकं तु वर्षं गन्धवहाशनः ।
वर्षं धूमाशनो देवि पञ्चाग्निपरिमध्यगः ।। ३ ।।

सदा चानिमिषः सूर्यमण्डलस्थं विलोकयन् ।
एकहस्तेन गां बिभ्रदूर्ध्वपादस्थितो मुनिः ।। ४ ।।

पञ्चाक्षरपरो देवि पञ्चास्यध्यानतत्परः ।
जटालम्बिशिरोऽत्यर्थं न्यग्रोध इव वर्षके ।। ५ ।।

पादावाबध्य वृक्षाग्रे मुनिर्लम्बदधः शिराः ।
वर्षमेकं महादेवि भस्मच्छन्नस्त्रिपुण्ड्रधृक् ।। ६ ।।

सुरवित्रासनकरं विष्णुब्रह्मादिभिः सुरैः ।
मुनिभिर्गणपैश्चैव तदशक्यं तपोऽम्बिके ।। ७ ।।

दुर्वाससा यथा तप्तं तथा केनापि नोऽम्बिके ।
एवं सन्तप्यमानोऽयं सदा मल्लिङ्गपूजकः ।। ८ ।।

---

1. कथामाकर्णयापर्णे मुनेर्दुर्वाससोऽद्भुताम् ।

सर्वावस्थास्वपि मुनिर्बिल्वपुष्पैर्विराजितैः ।
तस्यासन्बहवः शिष्या मुनयो वीतरागिणः ।। ९ ।।

भस्मत्रिपुण्ड्ररुद्राक्षधारिणश्चर्मवाससः ।
सर्वे लिङ्गार्चनपरा गुरुशुश्रूषणे रताः ।। १० ।।

तं शुश्रूषन्ति नियता सदा दुर्वाससं मुनिम् ।
तत्कालोचितसेवाभिर्नियमात्तोषयन्ति तम् ।। ११ ।।

एवं तपस्यतस्तस्य शतश्रृङ्गे महीधरे ।
नानाद्रुमलताकीर्णे नानापक्षिमृगायुते ।। १२ ।।

तपस्विशरणे तस्मिन् रम्यापारशिवालये ।
तत्राहमगमं देवि तत्प्रसादाय केवलम् ।। १३ ।।

आरुह्य वृषभं देवि गणसङ्घनिषेवितम् ।
तं दृष्ट्वा विस्मयोपेतस्तत्र तं मुनिपुङ्गवम् ।। १४ ।।

वृतं सहस्रशिष्यैश्च स्वसमानैर्महेश्वरि ।
अवोचं परया प्रीत्या तदा दुर्वाससं मुनिम् ।। १५ ।।

**ईश्वर उवाच**

दुर्वासास्त्वं तपोराशिर्वाराशिरिव धैर्यधृक् ।
अकम्प्यो भूमिभृत्तुल्यो यशोधनतपोधनः ।। १६ ।।

सदावाताशिपर्णाशी सलिलाश्यनिलाशकः ।
तव द्रष्टुं तपो घोरमागतोऽस्मि वरं वृणु ।। १७ ।।

तावन्निमीलिताक्षः स विषमाक्षमवेक्ष्य च ।
त्र्यक्षसन्दर्शनानन्दसञ्जातपुलको मुनिः ।। १८ ।।

अथालुलोके स्वदृशा सदृशं भास्कराधिकम् ।
वृषस्थगणपैर्युक्तं मां तुष्टावाष्टपद्यकैः ।। १९ ।।

वेदार्थ सार सर्वस्वैस्तत्स्तुतिं श्रुणु शैलजे ।। २० ।।

**ईश्वरः (उवाच)**

इलामिलन्मौलिरथेन्दुमौलिं
मायानिशानिद्रित जीवितेन्द्रम् ।
विद्राविचिन्मुद्रकराग्रमुग्रं
व्यालेन्द्रमालं गरनीलकण्ठं
मां कालकालं मुनिरालुलोके ।। २१ ।।

**दुर्वासाः (उवाच)**

स्वधामा क्षिप्रेषुर्मृग इव सुभीमे दहरग-
स्त्वधूमो ज्योतिस्त्वं महिमगत आद्यश्च भगवन् ।
अषाढं त्वामुग्रं स्थिरकरणकायेन वचसा
नुमस्स्तूमोद्धेमस्तनुगतमथैनो निवपतु ।। २२ ।।

मनो महान्तमुतमानो अर्भकं
मान उक्षन्तमुतमान उक्षितम् ।
मानो वधीस्तनयं त्वसुतं त गाव-
श्चाश्वान् हविषा त्वां यजामः ।। २३ ।।

शम्भोऽस्मदीयविविधेषु दुरावरेषु
पापेषु निष्कृतिमतोऽप्यविनाशकेषु ।
एक द्विधात्रिचतुरेष्वपि पञ्चकेषु
त्वं शूरभूरिषुवधिः करुणार्द्रदृष्ट्या ।। २४ ।।

अन्तर्ये न भजन्ति मूढमतयो ध्यानं मनीषाततं
रुद्रं त्र्यम्बकमम्बिकाविलसितं श्रीकण्ठमीशं सदा ।
लिङ्गे कोमलबिल्वपल्लवदलैर्नार्चन्ति ये जिह्वया
त्वद्भक्तामलशेषभुक्तिरहिता गृह्णन्ति ते वै मलम् ।।

देवं लिङ्गवरे सदा स्थितमहो बिल्वैर्दलैः कोमलै-
र्नीरैर्वापि मखक्रियासु भगवन् सोमस्य वा गह्वया ।
भूर्णित्वा सवनेषु क्रोधितवपुर्भीमं मृगेन्द्रोपमं
याचे देव सदा गिरा मधुरया मा चुक्रुधः शङ्कर ।।

कस्त्वां दैवतसार्वभौमरहितं याचेऽद्य ईशानकं
आभिस्त्वां भगवन् सदैव च नमोगीर्भिश्च रुद्रोद्यतैः ।
नक्तं चापि दिवा महेश पितरं हृद्गं बृहन्तं मृधं
मृष्टं त्वामजरं सुषुम्णमपि वै रुद्राण्यया संयुतम् ।। २७

राजच्चन्द्रकलाधरं च भुवनस्येशानमिन्दुप्रभं
त्वद्भक्ताः कवयो भवेम सततं त्वल्लिङ्गपूजादराः ।
त्वं शम्भुः प्रमतिः पितासि हितकृद्बन्धुस्त्वमेवासि मे
त्वं माता परमो वयस्कृदपि मे त्वज्जामयो वा वयम् ।।

त्वां देवं च भजाम शङ्कर विभो त्वद्भक्तिधारारसैः ।। २९

दुर्वासाष्टकमेतदेव कलितं चित्ते कुतो दुर्वसः
क्रोधो नाम भविष्यतीशभजनात्तं वै श्रियो वाञ्छिताः ।
उद्यच्चामरछत्र पङ्क्तिविलासन्मत्तेभकुम्भस्थिता
राजद्बन्दिगणस्तुता मधुरया वाचा सदा ते नराः ।। ३०

तुष्टस्तत्परया भक्त्या तं ब्रुवन्तं मुनिं शिवे ।
प्रोवाच नित्यता तस्य मत्कैलासागमस्तथा ।। ३१ ।।

सर्वलोकेषु नियतं वासः सर्वत्र पूजनम् ।
अमोघक्रोधहर्षाप्तिः शापान्नैव तपः क्षयः ।। ३२ ।।

इत्थं[1] ययाचे स मुनिस्तत्सर्वं दत्तवानहम् ।
दत्त्वास्मै सर्वकामान्वै तेन सम्पूजितस्तथा ।। ३३ ।।

तस्मादपक्रमञ्छैलाच्छतश्रृङ्गात् तदा क्षणात् ।
कैलासभूधरं प्राप्तः शाङ्करेणामुना शिवे ।। ३४ ।।

गायता शाङ्करं साम नन्दिना विश्वनन्दिना ।
गणेन रैवतेनाथ सामरैवतगायिना ।। ३५ ।।

सन्तुष्टोऽति प्रसन्नास्यः कैलासेश्वरपूजकः ।
निशामुखे प्रदोषे मे प्रदोषे तत्र शङ्करि ।। ३६ ।।

सम्पूज्य देवं कैलासादभिन्नं लिङ्गमेव वा ।
पूजान्ते स मुनिर्दृष्ट्वा दुर्वासाः सहशिष्यकः ।। ३७ ।।

कैलासलिङ्गं नत्वा मां प्रतिष्ठाप्यात्र लिङ्गकम् ।
स्वनाम्ना मम कैलासे दुर्वासेश्वरनामकम् ।। ३८ ।।

लिङ्गं तद्विकटेशानात्पश्चिमे दिव्यधामगम् ।
नित्यं त्रिकालमभ्यर्च्य मां वीक्ष्यायाति गच्छति ।। ३९ ।।

तत्र तत्र सदा देवि तस्मिन्कैलासपर्वते ।
तस्मै प्रीत्या मया दत्ता बिल्वपुष्करसंयुता ।। ४० ।।

---

1. यद्यत्

कैलासलिङ्गमौलीतः प्रीत्या तस्य मुनेः करे ।
तां गृहीत्वा मुनिर्मालां नेत्रे शिरसि चार्पयत् ।। ४१ ।।

प्रसन्नेन मया दत्तं निर्माल्यं निर्मलाय हि ।
शाङ्कराय मया दत्तस्त्वन्येषां देवि दुर्लभः ।। ४२ ।।

मत्तः प्रसादं सम्प्राप्य निर्गतो मम भूधरात् ।
अटता तेन विप्रेण दृष्टो मार्गे महेश्वरः ।। ४३ ।।

देवैः परिवृतश्चेन्द्रः कुलिशोद्यत्करो युवा ।
शच्याप्यनुगतः शक्रश्छत्रचामरशोभितः ।। ४४ ।।

नृत्यद्भिरप्सरस्सङ्घैः परितो यायिदैवतैः ।
शारदाभ्रघनप्रख्यं गजमभ्रमुवल्लभम् ।। ४५ ।।

चतुर्दन्तं महाकायमारुह्य पुरतो मुनेः ।
ययौ देवेश्वरस्तत्र तस्मै मालामदात्तदा ।। ४६ ।।

सोऽप्यखर्वमहागर्वदुर्वाराम्बुधिमध्यगः ।
अगणय्य मुनिं तां च मालां मेऽद्य प्रसादिताम् ।। ४७ ।।

अङ्कुशाग्रेण जग्राह मत्तवारणकुम्भगः ।
दुर्वासदत्तां तां मालां पातयामास हेलया ।। ४८ ।।

कुम्भे कुम्भिपतेस्तस्य ययौ मन्दं शतक्रतुः ।
मदान्धस्तस्यकरटी शुण्डाग्रेणाग्रहीत्तदा ।। ४९ ।।

स्वकण्ठे ताडयामास कुम्भाग्रे कर्णयोस्तथा ।
तं तादृशं स दृष्ट्वैव करटं[1] करटिस्थितम् ।। ५० ।।

---

1. करट - a low graded man. The word करट in this verse qualifies Indra for his bad sinful act.

चुक्रोध क्रोधभारेण अशपत्तं मुनिस्तदा ।
शतमन्युं मन्युनाऽसौ महामन्युप्रसादभाक् ।। ५१ ।।

**दुर्वासाः (उवाच)**

कोऽद्य गर्वोऽमराधीश देवीशम्भुप्रसादिताम् ।
मालां मौलौ गजस्याद्य पातयस्यद्य दुर्मते ।। ५२ ।।

विनष्टभ्रष्टराज्याङ्गो निःश्रीकस्त्वं भविष्यसि ।
अयमैरावतः क्षिप्रं दानवैश्च प्रपीडितः ।। ५३ ।।

त्वया दुःखं महत्तीव्रं [1]प्राप्नोति सुरसद्गजः ।
तवानुयायिनो देवा गुरुस्त्वद्बोधदायकः ।। ५४ ।।

मन्दोऽनुयातः सगणो दुःखं प्राप्नोतु शाश्वतम् ।
इत्युक्तं तद्वचः श्रुत्वा सगुरुः स शतक्रतुः ।। ५५ ।।

अवरुह्य गजात्क्षिप्रं नत्वा च मुनिपादयोः ।
शच्या च गुरुणा देवैः स दुर्वासाः प्रसादितः ।। ५६ ।।

**इन्द्रः (उवाच)**

क्षमापराधं मेऽद्याशु विमोकं वद सत्तम ।
तवापराधः केनैव धार्यते मुनिसत्तम ।। ५७ ।।

शिवदत्तमहामालालङ्घनेनाद्य दुर्मतिः ।
मदान्धेन मयाऽकारि चेष्टितं तव कोपकृत् ।। ५८ ।।

इत्युक्तो बहुधा तेन स दुर्वासा महाप्रभः ।
उवाच तं गुरुं चापि मा ते बुद्धिः सदामर ।। ५९ ।।

---

1. प्राप्तव्यं सुरसद्गज ।

शिवमायागृहीतस्य देवराज्येन दुर्मते ।
मामप्रणम्य चाग्राहीन्मम वाङ्नानृता भवेत् ।। ६० ।।

वस त्वममरैर्युक्तस्तपसाऽभ्यर्चयन्हरम् ।
अयुतं देवशरदां हिमाद्रौ देवनायक ।। ६१ ।।

ततः प्राप्स्यसि राज्यं ते ह्यसुरैर्हृतमोजसा ।
इत्युक्त्वा निर्गतो देवि दुर्वासाः क्रोधमूर्छितः ।। ६२ ।।

इन्द्रो हिमाद्रिं सम्प्राप्य हृतराज्यः सुदैत्यपैः ।
बलिना पालितं देवी विष्टपं तुष्टतस्ततः ।। ६३ ।।

ततापं देवैर्गुरुणा शच्या त्रिदशनायकः ।
त्रपाकष्टभराक्रान्तः केदारेशं समर्चयन् ।। ६४ ।।

केदारमस्तुवद्भक्त्या पुनः प्रापामरावतीम् ।
दुर्वासोऽपि महायोगी शाम्भवः कल्मषैर्युतः ।। ६२ ।।

पुनस्तताप शरदां शतमानेन पार्वति ।
अशैवाय मया दत्तं निर्मल्यं शङ्करस्य हि ।। ६३ ।।

इति तद्द्रोहशान्त्यर्थं तप्यते परमं तपः ।
हिमाद्रिमौलौ देवेशि स दुर्वासा महामुनिः ।। ६४ ।।

तव सन्दर्शनाद्देवि विरतः स भविष्यति ।
यस्ते मदीयं कैलासमागन्ता स महामुनिः[1] ।। ६५ ।।

तस्मान्मदीयं निर्माल्यं निर्मलेनैव चेतसा ।
निर्मलैः शाम्भवैरेव ग्राह्यमन्यैर्न चाम्बिके ।। ६६ ।।

---

1. यतो मदीयं कैलासमागतः स महामुनिः इति पाठः सङ्गच्छते ।

मद्दत्तं चन्दनं पुष्पमन्नं भक्ष्यं फलादिकम् ।
मद्भक्तैरेव तद्ग्राह्यं देयं तेषां न चान्यतः ।। ६७ ।।

मर्यादा च कृता देवि मन्निर्माल्यस्य भक्षणम्[1] ।
धारणे शाम्भवा एव पात्रं निर्माल्यदर्शने ।। ६८ ।।

अशाम्भवे यथा दत्वा परितप्तो महामुनिः ।
मम प्रियोऽपि दुर्वासास्तथान्यः सत्यमुच्यते ।। ६९ ।।

तस्मान्निर्माल्यमीशानि शाम्भवायैव दापयेत् ।
तमनुग्राह्य देवेशि त्वत्पितुः शिखरे स्थितम् ।। ७० ।।

याहि तत्र विमानेन एकांशेनात्र संशयः[2] ।। ७१ ।।

इत्याज्ञां विपुलां प्रगृह्य नगजा दौर्वाससीं तां कथां
श्रुत्वा मोदितदन्तुराश्रुपुलका पित्रा गणेन्द्रैरपि ।
स्कन्देनापि मया तथा गजवरास्येनापि सन्तोषतः
यानायाशु तदा तथा गणवरैर्देवी सखीनां गणैः ।। ७२ ।।

उद्युक्ताऽभवदीश्वरेश्वररता देवी मुदा स्वांशतः ।
कृत्वा चान्यवपुस्तदा नगवरे देवाङ्कसंस्था शिवा ।। ७३

।। इति श्रीशिवरहस्ये द्वितीयांशे दुर्वासस्तपश्चर्या नाम
सप्तविंशोऽध्यायः ।।

---

1. भक्षणे इति सङ्गतः पाठः ।।
2. संवसेति लिखितव्यमन्यथालिखितमिति भाति ।

## ।। अष्टाविंशोऽध्यायः ।।

जैगीषव्यः (उवाच)

कथं कैलाससदनान्निर्गता जगदम्बिका ।
दुर्वाससा स्तुता देवी कथं देवानुमोदिता ।। १ ।।

कियन्तं कालमवसत्कथं देवी परा शिवा ।
कथं सा पूजिता देवी हिमशैलेन मेनया ।। २ ।।

केदारेश्वर पूजापि कथं देव्या सुराङ्गनाः ।
अश्रौषं सङ्गताश्चेति तारकारे वदाद्य तत् ।। ३ ।।

पुरारिप्रेमसदन नगपौत्र नगान्तक ।

सूतः उवाच

इत्थं पृष्टः स मुनिना स्कन्द ऊचे मुनीन्गणान् ।। ४ ।।

देव्या हिमाद्रिगमनं श्रृणुध्वं तेन कीर्तितम् ।

स्कन्द उवाच

जैगीषव्य जितक्रोध कामारातिपदार्चक ।। ५ ।।

अनाख्येयं त्वयि मुनौ नास्ति किञ्चिन्ममाधुना ।।
ततो बहुतिथे काले याते स परमेश्वरः ।। ६ ।

देव्या विहारशयनैर्भोगिजालैरनेकशः ।
देव्या सम्प्रार्थितो देवो हिमाद्रिगमनं प्रति ।। ७ ।।

**देवी (उवाच)**

नगराजोऽयमधुना मेनया सह शङ्कर ।
मां प्रार्थयति केदारं द्रष्टुं लिङ्गं तव प्रभो ।। ८ ।।

दुर्वासापि महायोगी तव भक्तो जितेन्द्रियः ।
तपसा कर्शिततनुस्तव पादाब्जपूजकः ।। ९ ।।

अनुगृह्य मुनिं लिङ्गं केदारं पूज्य भाविता ।
मेनया भूधरेणाद्य पूजिता तन्नगोत्तमे ।। १० ।।

विपिनावनिमीशान गङ्गां तत्राब्जिनीमपि ।
विगाह्य सखिभिः[1] स्वैरं दृष्ट्वा तन्मौलिभास्वरम् ।। ११ ।।

कैलासमागमिष्यामि यद्याज्ञा तव शङ्कर ।

**सूतः (उवाच)**

इत्यम्बावचनं श्रुत्वा प्राह देवोऽद्रिजासखः ।। १२ ।।

किञ्चिन्म्लानमुखाम्भोजो देवीमाह महेश्वरः ।

**ईश्वरः (उवाच)**

श्वः प्रभाते महादेवि गच्छ त्वं नगमौलितः ।। १३ ।।

विहराद्य मया सार्धं कैलासमणिसद्मनि ।
सृजस्व शक्तिं देवेशि तव देहान्ममाङ्कगाम् ।। १४ ।।

इत्युक्ता देवदेवेन सा देवी गिरिजा तदा ।
मनसोन्मन्यशक्तिं तां निर्माय परमेश्वरी ।। १५ ।।

---

1. सखीभिरित्यर्थे पुंल्लिङ्ग प्रयोगः ।

राजद्धम्मिल्लपुष्पाख्यामुदितेन्दुसमाननाम् ।
नीलोत्पलदलप्रख्यनयनद्वयशोभिताम् ।। १६ ।।

बिम्बाधरां [1]गन्धफलीनासालम्बितमौक्तिकाम् ।
रत्नग्रैवेयमालाढ्यां फुल्लहल्लकधारिणीम् ।। १७ ।।

लसद्रत्नाच्छताटङ्कां चन्द्रार्धमकुटोज्ज्वलाम् ।
तिलकाङ्कितसत्फालामलकात्तपदद्वयाम् ।। १८ ।।

रत्नाङ्गदभुजां देवीं रत्नकाञ्चीलसत्कटिम् ।
रत्नाङ्गुलीय विलसत्करशाखाग्रपल्लाम् ।। १९ ।।

पादाम्बुजरणद्रत्नश्रृङ्खलानूपुरान्विताम् ।
दिव्याम्बरवृतां तत्र दिव्यचन्दनचर्चिताम् ।। २० ।।

रत्नकुङ्कुमवर्णां तां ताम्बूलास्यां सुमध्यमाम् ।
मनोन्मनीं तां ससृजे मनसा सा महेश्वरी ।। २१ ।।

मनोन्मन्या तया देवी तस्मिन्कैलासपर्वते ।
मनोन्मनीश्वरं लिङ्गं दिव्यप्रासादमध्यगम् ।। २२ ।।

प्रतिष्ठाप्यार्चयामास पञ्चामृतनिषेचनैः ।
गन्धैर्धूपैश्च वासोभिर्दीपैर्बिल्वैश्च पङ्कजैः ।। २३ ।।

नैवेद्यैश्चैव ताम्बूलैर्मणिनीराजनोत्सवैः ।
सापि तुष्टाव तल्लिङ्गं देव्याश्चिच्छक्तिरीश्वरी ।। २४ ।।

---

1. गन्धफली – The Priyangu creeper or a bud of a Champaka tree.

**मनोन्मनी (उवाच)**

वाचामगोचर मनो(नसो)ऽपि मनोन्मनीश
देवेश द्योतक मनोसुगुणस्य काश ।
त्वं व्योमकेश दयया शशिधाममौले
पाहीन्द्रियादिरहित प्रणवप्रकाश ।। २५ ।।

बालार्धगात्र रमणीयजटोरुगङ्गा-
तुङ्गोत्तमाङ्ग शिशिधामललाम शम्भो ।
विश्वेश विश्व मदनान्तकर प्रसीद
कैलासवास निखिलागमसत्वसार ।। २६ ।।

एवं संस्तुत्य तल्लिङ्गं तया देव्या शिवा तदा ।
पूजया देवदेवस्य तां प्रीतामकरोच्छिवे ।। २७ ।।

तामानिनाय देवस्य सन्निधिं परमेश्वरी ।
प्रणामं शम्भुपादाब्जे तया देव्या तदाकरोत् ।। २८ ।।

तद्दर्शनसुधासारस्मेरास्यं प्राह शङ्करम् ।

**देवी (उवाच)**

मयैवोत्पादिता शक्तिस्तव वामाङ्कसंस्थिता ।। २९ ।।

मनोन्मनीयमतुला ह्यनया विहरेश्वर ।
यत्र कुत्रापि वा क्षेत्रे भूलोके वाऽमरालये ।। ३० ।.

तव लिङ्गसमीपस्था त्वत्प्रीत्यै भवताद्भव ।
अस्मिन्कैलाससदने अनया स्थापितं तव ।। ३१ ।।

मनोन्मनीश्वरं लिङ्गं तस्मिन् सन्निहितो भव ।
यावदागमनं मेऽद्य तव पादाम्बुजादरा ।। ३२ ।।

विहाराहारशयनैस्त्वयैषाद्यानुगृह्यताम् ।।
तव मोदाय देवेश मनसेयं विनिर्मिता ।। ३३ ।।

इत्यम्बावचनानन्दसन्दोहपुलकाङ्गकः ।
दृष्ट्वा मनोन्मनीं शक्तिं तल्लिङ्गं स्थापितं तया ।। ३४

प्रहर्षजातसौहार्दां तां गाढं परिषस्वजे ।
देवीं स्वाङ्के सन्निवेश्य तया स बुभुजेश्वरः ।। ३५ ।।

रत्नपात्रेषु सङ्क्लृप्तमन्नजातं चतुर्विधम् ।
दिव्याभरणवासोभिर्धूपदीपैस्तथाम्बिकाम् ।। ३६ ।।

सुस्नातां समलङ्कृत्य प्राह नन्दिनमीश्वरः ।

**(ईश्वरः उवाच)**

देव्यानया गणेन्द्रैश्च नगेन्द्रेण सहामुना ।। ३७ ।।

मेनया गणपेन त्वं स्कन्देन ससखीगणैः ।
विमानेनार्कवर्णेन मणिसिह्मोपशोभिना ।। ३८ ।।

गच्छ त्वं द्रुतमेवाद्य शिवया हिमभूधरम् ।
देव्या यथोचितां पूजां तत्र तत्र प्रकल्पय ।। ३९ ।।

न ग्लानिर्न श्रमोवाऽस्याः सूर्यचन्द्रकरैः शिवाम् ।
भक्ष्यैर्भोज्यैश्च विविधैगन्धपुष्पैर्मनोहरैः ।। ४० ।।

हिमाचलं समैनाकं मेनामेनां गणोत्तम ।
गणेश्वरान् सखीजालं स्कन्दविघ्नेश्वरौ सुतौ ।। ४१ ।।

सम्पूजय यथाजोषं पथि श्रान्तिविवर्जितान् ।
परिष्कृतं रत्नजालैर्विमानं कल्पयादरात् ।। ४२ ।।

देव्या हिमद्रिगमने शीघ्रं संविधीयताम् ।
इत्याज्ञां शिरसा शम्भोः प्रगृह्य स शिलादजः ।। ४३ ।।

नानाकक्ष्यान्वितं रत्नं पर्यन्तवरवेदिकम् ।
मुक्तावितानविततं रत्नद्वारशतावृतम् ।। ४४ ।।

मणिहंसमहासिह्मं पिकसङ्घविनादितम् ।
क्रीडामयूर[1]चरितं पताकार्बुदशोभितम् ।। ४५ ।।

रुद्रावतारक्रीडादि[2]चरितं चारुशिल्पकैः ।
मणिजालाङ्कितं दिव्यमुद्यत्कलशभासुरम् ।। ४६ ।।

घण्टानादितदिक्चक्रं पुष्पदामोपशोभितम् ।
रणन्वेणुमहावीणा शङ्खदुन्दुभिघोषितम् ।। ४७ ।।

भक्ष्य भोज्यान्नपानैश्च सुगन्धामोदमोदितम् ।
धूपितं वरधूपैश्च नानामणिगणान्वतम् ।। ४८ ।।

दिव्यसिह्मासनोपेतं पताकाछत्रचामरैः ।
शोभितं रत्नमञ्चैश्च शय्यागृहविभूषितम् ।। ४९ ।।

---

1 and 2. रचितं लिखितं मोहात् चरितं यदनन्वितम् , तत्तु लेखक-दोषेण ।।

सुरम्योद्दाममुकुरतल पङ्क्तिविराजितम् ।
सोपधानकुथोपेतं कक्ष्याशतविचित्रितम् ।। ५० ।।

कैलासशिखराकारं विमानं सार्वगामिकम् ।
रुद्राणीगीतमाधुर्य वीणादिध्वनिशोभितम् ।। ५१ ।।

तद्देवाय तदा नन्दी विमानं दर्शयत्क्षयणात्[1] ।
देवो दृष्ट्वा गणैर्नीतमद्रिजामाह शङ्करः ।। ५२ ।।

ईश्वरः (उवाच)

सिद्धं विमानं देवेशि तव गन्तुमुपस्थितम् ।
दिव्यो मुहूर्तसमयः समारोह द्रुतं शिवे ।। ५३ ।।

मैनाकेन गिरिशेन मेनया स्वसखीजनैः ।
तवानुयात्राः सर्वेऽद्य स्कन्दहेरम्बकाः सुताः ।। ५४ ।।

नन्दीश्वरो वीरभद्रश्चण्डुभृङ्गी रिटिस्तथा ।
सेवां कुर्वन्तु देवेशि त्वदीयाज्ञावशास्तदा ।। ५५ ।।

विश्राम्य पथि देवेशि गच्छानन्दरसैर्युता ।
इत्युक्ता सा शिवाऽऽदेशं प्रहृष्टहृदया शिवा ।। ५६ ।।

स्तुत्वा नत्वा महादेवं सा गाढं परिषस्वजे ।
किञ्चिदानन्दाजाश्रूणि मुञ्चन्ती सा शिवाननम् ।। ५७ ।।

वीक्ष्य त्रिलोचनानन्दजाश्रूणि परिमार्जती ।
वासाञ्चलेन तामाह संस्थितां च मनोन्मनीम् ।। ५८ ।।

---

1. दर्शयामास च क्षणात् ।

**देवी (उवाच)**

शिवाज्ञाकारिणी भद्रे शयनासनचेष्टितैः ।
कामाङ्गनाशनाऽपार चित्तरागानुवर्तिनी ।। ५९ ।।

विहरस्व यथाजोषं यावदागमनं मम ।
इत्याज्ञाप्य तदा देवी पुरःसंस्थां मनोन्मनीम् ।। ६० ।।

सा प्रणम्य शिवापादौ तदा मूर्ध्न्युपजिघ्रिता ।
शिवेनानुगता देवी कश्चित्कक्ष्यादिका युतः[1] ।। ६१ ।।

प्रतस्थे सा तदा देवी सखीगणनिषेविता ।
छत्रैः पताकैर्व्यजनैश्चामराणां च पङ्क्तिभिः ।। ६२ ।।

भूषणैर्वरताम्बूलवासस्त्रग्गन्धधारिणः ।
तामन्वयुर्महादेवीं गणा नन्द्यादयस्तथा ।। ६३ ।।

प्रोत्सारितमहाकक्ष्या गणानां वेत्रधारिणाम् ।
विकिरन्ति महादेव्याः पुष्पाणि पुरतो गणाः ।। ६४ ।।

मृदङ्गमुरजापारशङ्कदुन्दुभिनिःस्वनैः ।
नृत्यन्ति रुद्रकन्याश्च देव्यास्ताः सन्निधौ मुदा ।। ६५ ।।

कैलासशिखरोद्दामप्रासादवरमौलिगाः ।
विकिरन्ति महादेवीं लाजैः सुमनसां गणैः ।। ६६ ।।

जयेति प्रसभं वाचो मुमुचुस्ते गणोत्तमाः ।
तामालिङ्ग्य महादेवीमनुयातां मनोन्मनीम् । ६७ ।।

---

1. काश्चित्कक्ष्यादिकाः शनैः ।

देवपार्श्वं द्रुतं गच्छेत्यशात्तां मेनयाऽनुगा ।
विमानवरमारुह्य सिह्मासनवराश्रिता ।। ६८ ।।

मेनया भूधरेशेन मैनाकेन सखीगणैः ।
स्कन्देन गणपेनेशी नन्द्यादिगणपैस्तदा ।। ६९ ।।

जयेति पूजिता वाग्भिः सन्तोषाकुलमानसा ।
रुद्राणीकरजोद्गीर्णवीणाक्वणनसुन्दरैः ।। ७० ।।

शिवनामामृतरसं पिबन्ती श्रोत्रसम्पदा ।
नयनानन्ददं देवी पश्यन्ती स्वसखीगणैः ।। ७१ ।।

वीजिता व्यजनैश्चित्रैश्चामरै[1]सखिभिस्तदा ।
पूजिता भक्ष्यभोज्यैश्च पेयैर्धूपैश्च धूपिता ।। ७२ ।।

मेनया विहरन्ती सा ययौ मन्दं हिमालयम् ।
पश्यन्ती दिव्यसौधानां मौलीः प्रोद्यत्पताककाः ।। ७३ ।।

कैलासलिङ्गधामानि प्रोद्यत्कुम्भानि सा शिवा ।
ध्यायन्ती शिवपादाब्ज विहाराहारचेष्टितम् ।। ७४ ।।

स्मरतः स्वचरित्राणि शिवस्य परमात्मनः ।
सर्वान्गणेन्द्रान्पितरं स्कन्दहेरम्बकावपि ।। ७५ ।।

निवेश्य बाह्यकक्ष्याया विमानस्यार्करोचिषः ।
शिवनैवेद्यभक्ष्यान्नैरतर्पयत शङ्करी ।। ७६ ।।

---

1. सखीभिरित्येवार्थे पुँल्लिङ्गप्रयोगः ।

स्रग्गन्धाभरणैरुच्चै रुद्राणीवरनर्तनैः ।
समाययौ सा पितरं नगेन्द्रं पार्वती तदा ।। ७७ ।।

यावत्कैलासशिखरं दर्शिताऽऽनन्दितान्तरा ।
अपक्ष्मपक्ष्मपातेन पश्यन्ती भर्तुरालयम् ।। ७८ ।।

प्रणम्य तद्विमानाग्रं देवदेवस्य शूलिनः ।
तावद्दर्श सा दूरात्केदारेशशिवालयम् ।। ७९ ।।

जलकुम्भपताकाग्रवरगोपुरभूधरम् ।
तत्र प्रणम्य सा देवी दूरादैक्षद्धिमाचलम् ।। ८० ।।

तदा हिमाचलेन्द्रेण पार्वतीया गणोत्तमाः ।
प्रेषिताः श्रीमहेशान्याः सद्मालङ्कर्तुमुद्यताः ।। ८१ ।.

स्वमौलिमपि केदाररम्यचारुशिवालयम् ।
सिक्ता गन्धाम्बुभिर्मार्गाः फलितास्तत्र ते नगाः ।। ८२ ।।

नगोर्ध्वशिखरोद्भासि फलपुष्पाणि(ळि)शोभिताः ।
दीपावलीविरचित रक्ततोरणपङ्क्तयः ।। ८३ ।।

प्रोद्यद्रम्भाफलभर पुष्पैश्चैवावलम्बिभिः ।
द्वारेषु परिक्लृप्ताश्च मणिकुम्भाः सुपल्लवाः ।। ८४ ।।

रङ्गावल्लीविराचिताः[1] स्वमौलिवरश्रृङ्गके ।
केदारेशालयं तस्य दिव्यधूपविराजितम् ।। ८५ ।।

---

1. रङ्गवल्ल्यो विरचिताः ।

प्रोद्यत्पताकाबहुलं बिल्वमन्दार पूजितम् ।
लिङ्गं तच्चन्दनालिप्तं फणीफणविभूषितम् ।। ८६ ।।

देवाङ्गनाः समायाता विष्णुब्रह्मादयः सुराः ।
गन्धर्वा मुनयः सिद्धाश्चारणाश्चाप्सरोगणाः ।। ८७ ।।

स्तुवन्ति च महादेवीं नृत्यन्त्यप्सरसः पुरः ।
गायन्ति गीतं गन्धर्वा वेदाञ्जेपुर्मुनीश्वराः ।। ८८ ।।

एवं नानाविधैर्घोषैर्युक्ता सा परमेश्वरी ।
स्वपितुश्चारुशिखरप्रासादवरमासदत् ।। ८९ ।।

देवैः स्तुता गणेन्द्रैश्च पित्रा मात्रानुमोदिता ।
तत्राविशत्पितुर्वेश्म विमानादवरुह्य सा ।। ९० ।।

मात्रा दत्तकरा देवी दिव्यसिह्मासनाश्रिता ।
विहाराहार शय्याभिः पूजिता परमेश्वरी ।। ९१ ।।

उवास हिमशैले सा स्वपितुर्भवने मुदा ।
मणिदीपजपङ्क्तीभिस्तदानीं राजिताम्बिका ।। ९२ ।।

वासोभी रत्नपुष्पैश्च गिरीन्द्रेणार्चिता शिवा ।
ऊषुर्गिरिगृहे सर्वे मासं देव्याऽनुगर्विताः ।। ९३ ।।

विसृज्य स्कन्दहेरम्बैः नन्दिकेशानुगान्गणान् ।
याते त्यशयाद्गणान्देवी कैलासं शङ्करालयम् ।। ९४ ।।

---

1. यातेत्यशाद्गणान् इति सङ्गतः पाठः ।

प्रणम्य तां महादेवीं स्कन्दनन्द्यादयो गणाः ।
ययुस्तदा ते कैलासं विमानेनार्करोचिषा ।। ९५ ।।

देवी सखीभिः सहिता विजहार पितुर्गृहे ।
रम्यक्रीडाविनोदैश्च मात्रा पित्रा च पूजिता ।। ९६ ।।

गत्वा ते प्रमथाधीशा नत्वा देवं महेश्वरम् ।
व्यजिज्ञपंस्ते वृत्तान्तं देव्या गमनसम्भ्रमम् ।। ९७ ।।

हिमाचलनिवेशं च देवानां दर्शनं गणाः ।
शिवावृत्तान्तमखिलं श्रुत्वा देवः पिताकधृक् ।। ९८ ।।

विजहार स कैलासे चिन्तयन्त्स शिवागमम् ।
मनोन्मन्या महादेवी कैलासवरसौधगः ।। ९९ ।।

चिक्रीड सरसालाप विहारशयनासनैः ।

यश्चेमां महिमां नगोत्तमकथां श्रुत्वा महेशाश्रयां
देव्याश्चागमनं हिमाचलवरे कन्याःपि वन्दे सतीम् ।
सौभाग्यं धनमक्षयं क्षितितले त्र्यक्षाङ्घ्रिपद्मार्चकः
कष्टैश्चापि विमुक्त एव सततं तुष्टः सदा बन्धुभिः ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे हिमवतः कैलासदर्शनं नाम
अष्टाविंशोऽध्यायः ।।



## ।। एकोनत्रिंशोऽध्यायः ।।

**गणाः (ऊचुः)***

कथं देव्या महायोगी दुर्वासाः स प्रसादभाक् ।
कथं तेन स्तुता देवी तत्स्कन्द वद नोऽधुना ।। १ ।।

तत्स्तुतिश्रवणादेव सर्वेषामघनाशनम् ।
तारकारे भवत्येव सर्वेषां श्रृण्वतां वद ।। २ ।।

**स्कन्द उवाच**

कदाचित्सा महादेवी स्वपितुर्मौलिमीक्षती ।
गिरिवृक्षैः सुमवृतैः सरोवरमृगैर्वृतम् ।। ३ ।।

नानापक्षिरुतापार गायद्गन्धर्वकिन्नरैः ।
रीतीः शिखिरिधारीभिरापगा विततास्तदा ।। ४ ।।

मेनया विहरन्ती सा तस्यापश्यत चाश्रमम् ।
तपस्यद्भिर्मुनिवरैर्भस्मोद्धूलितविग्रहैः ।। ५ ।।

धृतत्रिपुण्ड्ररुद्राक्षरुद्राध्यायजपादरैः ।
पञ्चाक्षरजपासक्तैः पञ्चास्य ध्यानतत्परैः ।। ६ ।।

रुद्रलिङ्गार्चकैर्भक्त्या बिल्वैः पुष्पैः सदैव हि ।
केदारन्यस्तमनसैद्वारादरविवर्जितैः ।। ७ ।।

---

* जैगीषव्यमुखेषु श्रोतृगणेषु मध्ये ये गणास्ते ऊचुः

बृसीकटनिविष्टैश्च तापसैरुपशोभितम् ।
ध्यायद्भिर्मनसा साम्बं केदारेशं तपस्विनः ।। ८ ।।

फलमूलाम्बुपर्णाशाः पवनाशास्तथा परे ।
कटधूमाशिनः केचिन्नग्नाश्चर्मैकवाससः ।। ९ ।।

हृत्पुण्डरीके ध्यात्वेशं पुण्डरीकाजिनाम्बराः ।
तत्र तस्मिञ्छ्रमैर्हीनं आश्रमे विद्युदाकृतिम् ।। १० ।।

निरीक्ष्य देवीं दुर्वासाः स्वतपःफलमम्बिकाम् ।
एह्येहि मातरिति तां प्रणनाम तदा मुनिः ।। ११ ।।

दिव्यासनं दिशंस्तस्यै स मेनायै मुनीश्वराः ।
विस्मितैर्मुनिसङ्घैश्च मधुपर्कं[1] च पूजयत् ।। १२ ।।

पुष्पैर्गन्धैस्तथा धूपैः फलमूलैर्महेश्वरीम् ।
प्रीति दत्तं मुनीशेन देवी तच्चाग्रहीत्तदा ।। १३ ।।

तेन स्तुता महादेवी सिद्धासनवराश्रिता ।

**मुनिः (दुर्वासा उवाच)**

धन्योऽहं पावनोऽहं च त्वद्दर्शनमुमे मम ।। १४ ।।

तपः फलं च फलितं कालेनाद्य ममाम्बिके ।
त्वत्पादपङ्कजरजः प्राप्तयेमतपः फलम्[2] ।। १५ ।।

---

1. मधुपर्कैरपूजयदिति मधुपर्कं समार्पयदिति वा पाठः सुगमः ।
2. त्वत्पादपङ्कजरजः प्राप्तिर्मत्तपसः फलम् ।।

किं मुक्त्या मम देवेशि [1]यत्त्वं भक्त्येष्टसिद्धिदा ।
पराशक्तिर्महामाया ब्रह्मादिजननी शिवा ।। १६ ।।

महादेव[2]महादेववरवामार्धभागिनी ।
तुष्टाव प्रवणो भूत्वा तां शिवां स मुनिस्तदा ।। १७ ।।

दुर्वासाः (उवाच)

श्रीमातस्त्रिपुरे परात्परतरे देवि त्रिलोकीमहा-
सौन्दर्यार्णवमन्थनोद्भवसुधाप्राचुर्यवर्णोज्ज्वलम् ।
उद्यद्भानुसहस्रनूतनजपापुष्पप्रभं ते वपुः
स्वान्ते मे स्फुरतु त्रिलोकनिलयं ज्योतिर्मयं वाङ्मयम् ।।

आदिक्षान्त समस्तवर्णसुमणिप्रोते वितानप्रभे
ब्रह्मादिप्रतिमाभिकीलितषडाधाराब्जकक्ष्योन्नते ।
ब्रह्माण्डाब्जमहासने जननि ते मूर्तिं भजे चिन्मयीं
सोषुम्नायतपीतपङ्कजमहामध्यत्रिकोणस्थिताम् ।। १९ ।।

वन्दे वाग्भवमैन्दवात्मसदृशं वेदादिविद्या गिरो
भाषा देशसमुद्भवाः पशुगताः छन्दांसि सप्तस्वरान् ।
तालान् पञ्चमहाध्वनीन् प्रकटयत्यात्मप्रसारेण य-
त्तद्बीजं पदवाक्यमानजनकं श्रीमातृके ते परम् ।। २० ।।

त्रैलोक्यस्फुटमेत्र[3]मंत्रमहिम स्वात्मोक्तिरूपं विना
यद्बीजं व्यवहारजालमखिलं नास्त्येव मातस्तव ।
तज्जाप्यस्मरण प्रसक्तसुमतिः सर्वज्ञतां प्राप्य कः
शब्दब्रह्मनिवासभूतवदनो नेन्द्रादिभिः स्पर्धते ।। २१ ।।

---

1. यत्त्वं भक्तेष्टसिद्धिदा ।

2. महादेवी ।  3. त्रैलोक्यस्फुटमत्र मन्त्रमहिम

मात्रा यत्र विराजितेति विशदा तामष्टधामातृकां
शक्तिं कुण्डलिनीं चतुर्विधतनुं यस्तत्वविन्मन्यते ।
सा विद्याऽखिलजन्मकर्मदुरितानीत्थं प्रबोधाग्निना
भस्मीकृत्य विकल्पजालरहितो मातः पदं ते भजेत् ।। २२

यत्ते मध्यमबीजमम्ब [1]कलयेमादित्यवर्ण क्रिया-
ज्ञानेच्छासुखदुःखकल्पित तनु स्वात्मप्रसारेण यत् ।
काम्यं ब्रह्महरीश्वरादि विबुधैः कामक्रिया योजितैः
कामं कारणतां गता नगणितान्कार्यैरनेकैर्महि ।। २३ ।।

मुख्यैः सर्वमनोगतानधिगतान्मानैरनेकैः स्फुटं[2]
कामक्रोधसुलोभमोहमदमात्सर्यादिषट्कं च यत् ।
बीजं राजयति प्रणौमि तदहं ते साधु कामेश्वरी ।। २४ ।।

यद्भक्ताखिलकामपूरणचणस्वात्मप्रभावं महा-
जाड्यध्वान्तनिवारणैक तरणिज्योतिर्विबोधप्रदम् ।
यदेवेदेषु च गीयते श्रुतिमुखं मात्रात्रयेणोमिति
श्रीविद्ये तव सर्वराजवशकृच्छ्रीकामराजं भजे ।। २५ ।।

---

1. . . . . . . . . कलयाम्यादित्यवर्ण क्रिया-
ज्ञानेच्छादिमनन्तशक्तिविभवव्यक्तिं व्यनक्ति स्फुटम् ।
उत्पत्ति स्थितिकल्पकल्पिततनुं स्वात्मप्रसारेण य-
त्काम्यं ब्रह्महरीश्वरादिविबुधैः कामक्रियायोजितैः ।।
श्लो. २३ इति प्राचीनमुद्रितपुस्तके पाठः ।।

2. प्राचीनमुद्रित पुस्तके श्लोकस्यास्य प्रथमपादत्वेनेदं दृश्यते -
"कामं कारणतां गतानगणितान्कार्यैरनेकैर्मही" इति ।

यत्ते देवि तृतीयबीजमनल ज्वालावलीसन्निभं
सर्वाधार तुरीयशक्तिपरमं ब्रह्माभिधाशब्दितम् ।
मूर्धन्यान्तविसर्गभूषितमहोङ्कारात्मकं तत्परं
सच्चिद्रूपमनन्यतुल्यमहिमं स्वान्ते मम द्योतताम् ।। २६ ।।

सर्वं सर्वत एव सर्वविषये कार्येन्द्रियाण्यन्तरा
तत्तद्दिव्यहृषीककर्मभिरिदं देव्यस्तु वा नापरा ।
वागर्थव्यवहारकारणतनुः शक्तिर्जगद्व्यापिनी
यद्बीजात्मकतां गता तव शिवे तन्नौमि बीजं परम् ।। २७

अग्नीन्दुद्युमणिप्रभञ्जनधरानीरान्तरस्थायिनी
शक्तिर्ब्रह्महरीन्द्र(श)वासवमुखा मर्त्यासुरान्तस्थिरा ।
दृष्ट्वा(ष्टा)स्थावरजङ्गमस्थितमहाचैतन्यरूपा च या
यद्बीजस्मरणेन सैव भवती प्रादुर्भवत्यम्बिका ।। २८ ।।

स्वात्मश्रीविजिताजविष्णुमघवच्छ्रीपूरणैकव्रतं
तद्विद्याकविताविताललहरीकल्लोलिनीदीपितम् ।
बीजं यत्त्रिगुणप्रवृत्तिजनकं ब्रह्मेति यद्योगिनः
शान्ता नित्यमुपासते तदिह ते चित्ते दधे श्रीपुरे ।। २९ ।।

एकैकं तव मातृके परतरं संयोगिनो योगि वा
विद्यादिप्रकटप्रभावजनकं जाड्यान्धकारापहम् ।
यन्निष्ठाश्च महोत्पलासनमहाविष्णुप्रहर्तादयो
देवाः स्वेषु विधिष्वनन्तमहिमस्फूर्तिं दधत्येव तत् ।। ३०

इत्थं त्रीण्यपि मूलवाग्भवमहाश्रीकामराजस्मर-(स्फुर)
च्छक्त्याख्यानि चतुःश्रुतिप्रकटितान्युत्कृष्टकूटानि ते ।
भूतर्तुः श्रुतिसङ्ख्यपूर्णविदितान्यारक्तकान्ते शिवे
यो जानाति स एव सर्वजगतां सृष्टिस्थितिध्वंसकृत् ।।

नित्यं यस्तव मातृकाक्षरसखीं सौभाग्यविद्यां जपे-
त्सम्पूज्याखिलचक्रराजनिलयां सायन्तनाग्निप्रभाम् ।
कामाख्यं शिवनामतत्वमुभयं व्याप्यात्मना सर्वतो
दीप्यन्तीमिह तस्य सिद्धिरचिरात् स्यात्स्वस्वरूपैक्यता ।।

काव्यैर्वा पठितैः किमप्यविदुषो जोघुष्यमाणैः पुनः
किं तैर्व्याकरणैर्विबोधिततया किं वाभिधानश्रिया ।
एतैरेव न बोभवीति कविता वृत्तैर्वचःश्रीमतो
यावन्नानुसरीसरीति सरणिं पादाब्जयोः पावनीम् ।। ३३

गेहं नाकति गर्वितः प्रणमति स्त्रीसङ्गमो मोक्षति
द्वेषी मित्रति पातकं सुकृतति क्ष्मावल्लभो दासति ।
मृत्युर्वैद्यति दूषणं सुगुणति त्वत्पादसंसेवना-
त्त्वां वन्दे भवभीतिभञ्जनकरीं गौरीं गिरीशप्रियाम् ।। ३४

आद्यैरग्निरवीन्दुबिम्बनिलयैरम्ब त्रिलिङ्गात्मभि-
र्मिश्रारक्तसितप्रभैरनुपमैर्युष्मत्पदैस्तैस्त्रिभिः ।
आत्मोद्भासित काललोकनिगमावस्थानरादित्रयं[1]
तद्भूतं त्रिपुरेति नाम कलयेद्यस्ते स धन्यो भवेत् ।। ३५

आद्यो जाप्यतमार्थवाचकतया रूढः स्वरः पञ्चमः
सर्वोत्कृष्टतमार्थवाचकतया वर्णः पवर्गान्तकः ।

---

1. त्रयोद्भूतं तत् ।

वक्त्रत्वेन महाविभूतिसरणिः स्वाधारगो हृद्गतो
भ्रूमध्ये स्थित इत्यतः प्रणवतान्ते गीयतेऽम्बागमैः ।। ३६

गायत्री सशिरास्तुरीयसहिता सन्ध्यात्रयीत्यागमै-
राख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम् ।
तत्तदर्शनमुख्यशक्तिरपि च त्वं कर्मब्रह्मेश्वरी
कर्ताहं पुरुषो हरस्तु सविता बुद्धः शिवस्त्वं गुरुः ।। ३७

अन्नप्राणमनः प्रबोधपरमानन्दैः शिरः पक्षयु-
क्पुच्छात्मप्रकटैर्महोपनिषदां वाक्यैः प्रसिद्धीकृतैः ।
कोशैः पञ्चभिरेभिरम्ब भवतीमेतत्प्रलीनामिति
ज्योतिः प्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ।।

सच्चित्तत्वमसीति वाक्यविदितैरध्यात्मविद्या शिव-
ब्रह्माख्यैरतुलप्रभावजनकैस्तत्वैस्त्रिभिः सद्गुरोः ।
त्वद्रूपस्य मुखारविन्दकुहरात्सम्प्राप्य दीक्षामतो
यस्त्वां विन्दति तत्त्वतस्त्वमहमित्यार्ये स मुक्तो भवेत् ।।

सिद्धान्तैर्बहुभिः प्रमाणगणितैलन्यैरविद्यातमो-
नक्षत्रैरिव सर्वमन्धतमसं तावन्न निर्भिद्यते ।
यावत्ते सवितेव सम्मतमिदं नोदेति विश्वान्तरे
जन्तोर्जन्मनिवारणैकभिदुरं श्रीशाम्भवि श्रीशिवे ।। ४० ।।

आत्मासौ सकलेन्द्रियाश्रयमनोबुध्यादिभिः शोचितः
कर्माबद्धतनुर्जनिं च रमणं(मरणं) प्राप्नोति यत्कारणात् ।
तत्ते देवि महाविलासलहरीविद्यासुधा(युधा)नां जय-
स्तस्मात्वां गुरुमभ्युपेत्य कलयेत्त्वामेव चेन्मुच्यते ।। ४१

नानायोनिसहस्रसम्भववशाज्जाता जनन्यः कति
प्रख्याता जनकाः कियन्त इति मे सेत्स्यन्ति चाग्रे कति ।
एतेषां गणनैव नास्ति महतः संसारवारां निधे-
र्भीतं मां नितरामनन्यशरणं रक्षानुकम्पानिधे ।। ४२ ।।

देहक्षोभकरैर्व्रतैर्बहुविधैर्ध्यानैश्च होमैर्जपैः
सन्तानैर्हयमेधमुख्यसुमखैर्नानाविधैः कर्मभिः ।
यत्सङ्कल्पविकल्पजालमिलितं प्राप्तं पदं तस्य ते
दूरादेव निवर्तते परतरं मातः पदं निर्मलम् ।। ४३ ।।

पञ्चाशन्निजदेहजाक्षरभवैर्नानाविधैर्धातुभि-
र्बह्वर्थैः पदवाक्यमानजनकैरर्थाविनाभावितैः ।
साभिप्रायवदर्थकर्मफलदैः ख्यातै रनन्तैरिदं
विश्वं व्याप्य चिदात्मनाऽहमहमित्युज्जृम्भसे मातृके ।। ४४

श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकम्
विख्यातं तदधिष्ठिताक्षरशिवज्योतिर्मयं सर्वतः ।
एतन्मन्त्रमयात्मिकाभिररुण श्रीसुन्दरीभिर्वृतं
मध्ये बैन्दवसिह्मपीठललिते त्वं ब्रह्मविद्ये शिवे ।। ४५ ।।

आताम्रार्कसहस्रदीप्ति सुषमासौन्दर्यसारैरलं
कालातीतमहोदयैरुपचितैः सर्वोपमागोचरैः ।
नानारत्नविभूषणैरगणितैर्जाज्वल्यमानाभितः
त्वं मातस्त्रिपुरारिसुन्दरि कुरु स्वान्ते निवासं मम ।। ४६

शिञ्जन्नूपुरपादकङ्कणमहामुद्रासुलाक्षारसा-
लङ्काराङ्कितमङ्घ्रिपङ्कजयुगं श्रीपादुकालङ्कृतम् ।

उद्भास्वन्नखचन्द्रखण्डरुचिरं राजज्जपासन्निभं
ब्रह्मादित्रिदशैः समर्चितपदं मूर्ध्नि स्मराम्यम्बिके ।। ४६

आरक्तच्छविनातिमार्दवयुजा निःश्वासहार्येण य-
त्कौशेयैर्नवचित्ररत्नघटितैर्मुक्ताफलैरुज्ज्वलैः ।
कूजत्काञ्चनकिङ्किणीभिरभितः सन्नद्धकाञ्चीगुणै
रादीप्तं सुनितम्बबिम्बमरुणं ते भावयाम्यम्बिके ।। ४७ ।.

कस्तूरी घनसारकुङ्कुमरजोगन्धोत्कटैश्चन्दनै-
रालिप्तं मणिमालया विरचित (सुरुचिर) ग्रैवेयहारादिभिः ।
दीप्यद्दिव्यविभूषणैर्जननि ते ज्योतिर्विभावत्कुच-
व्याजस्वर्णघटद्वयं हरिहरब्रह्मादिपीतं भजे ।। ४८ ।।

मुक्तारत्न सुवर्णकान्तिललितास्ते बाहुवल्लीरहं
केयूरोत्तमबाहुदण्डवलयैर्हस्ताङ्गुलीभूषणैः ।
सम्पृक्ताः कलयामि हीरमणिमन्मुक्ताकलापीकृतं
ग्रीवापट्टविभूषणेन सुभगं कण्ठं च कम्बुश्रियम् ।। ४९ ।।

उद्यत्पूर्णकलानिधिश्रि वदनं भक्तप्रसन्नं सदा
सत्फुल्लाम्बुजपत्रकान्तिसुषमाधिक्कारदक्षेक्षणम् ।
सानन्दं कृतमन्दहासमसकृत्प्रादुर्भवत्कौतुकं
कुन्दाकारसुदन्तपङ्क्तिरुचिरं पूर्णं स्मराम्यम्बिके ।। ५०

तप्तस्वर्णकृतोरुकुण्डलयुगं माणिक्यमुक्तोल्लस-
द्धीराबद्धमनन्यतुल्यमपरं हैमं च चक्रद्वयम् ।
शुक्राकारनिकार[1]दक्षममलं मुक्ताफलं सुन्दरं
बिभ्रत्कर्णयुगं भजामि ललितं नासाग्रभागं शिवे ।। ५१ ।।

---

1. शुक्रस्य प्रभाधिकाकारस्य निकारे विजये भञ्जने धिक्करणे दक्षम् ।

जातीचम्पककुन्दकेसरमहागन्धोत्करं केतकी-
नीपाशोकशिरीषमुख्यकुसुमप्रोत्तंसिता धूपिताः ।
आनीलाञ्जनलीलमत्तमधुपश्रेणीव वेणी तव
श्रीमातः श्रयतां मदीयहृदयाम्भोजे सरोजालये ।। ५२ ।।

लेखालभ्यविचित्ररत्नघटितं हैमं किरीटोत्तमं
मुक्ताकाञ्चनकिङ्किणीगणमहाहीरप्रबन्धोज्ज्वलम् ।
चञ्चच्चन्द्रकलाकलापललितं देवद्रुपुष्पार्चितं
माल्यैरेव विलम्बितं सुशिखरं बिभ्रच्छिरस्ते भजे ।। ५३ ।।

प्रोक्षिप्तोच्चसुवर्णदण्डललितं पूर्णेन्दुबिम्बाकृतिं
छत्रं मौक्तिकरत्नचक्रकलितं क्षौमांशुकोत्तंसितम् ।
मुक्ताजालविलम्बितं सकलशं नानाप्रसूनार्चितं
चन्द्रोड्डामरचामरालि दधतीः श्रीदेवि ते स्वस्त्रियः ।। ५४

विद्यामन्त्ररहस्यविन्मुनिगणैः क्लृप्तोपचारार्चनां
देवादिस्तुतिगीयमानचरितां वेदान्ततत्त्वात्मिकाम् ।
सर्वास्ताश्च तुरीयतामुपगतास्त्वद्रश्मिदेव्यः परा
स्त्वां नित्यं समुपासते स्वविभवैः श्रीचक्रनाथे शिवे ।। ५५

श्रृङ्गारादिरसालयं त्रिभुवनीमाल्यैरनेकैर्वृतं
सर्वाङ्गीणसदङ्गरागसुरभि श्रीमद्वपुर्धूपितम् ।
ताम्बूलारुणपल्लवाधरयुतं रम्यं त्रिपुण्ड्रं वह-
त्फालं नन्दनचन्दनेन सुरभि ध्यायामि ते मङ्गलम् ।। ५६

एवं यः स्मरति प्रसि(बु)सुमतिः श्रीमत्स्वरूपं परं
वृद्धोऽप्याशु युवा भवत्यनुपमस्त्रीणामनङ्गायते ।

सोऽष्टैश्वर्यतिरस्कृताखिलसुरश्रीजृम्भितात्मालयः
पृथ्वीपालकिरीटकोटिवलिभिर्नीराजिताङ्घ्रिर्भवेत् ।। ५७

अथ तव धनुः पुष्पेषुत्व[1] प्रसिद्धमणिद्युति-
त्रिभुवनवधूमोहज्योत्स्नाकलानिधिमण्डलम् ।
अखिलजननि स्मारंस्मारं गतस्मरताञ्जन-
स्त्रिभुवनवधूमोहे बभ्रे[2] प्रपूर्णविधिर्भवेत् ।। ५८ ।।

प्रसूनशरचम्पकप्रकटगुम्फनागुम्फितं
त्रिलोकमवलोकयत्यमलचेतसां चञ्चलम् ।
अशेषरमणीजनं स्मरविजृम्भणं यः सदा
पटुर्भवति ते शिवे त्रिजगदङ्गनाक्षोभणे ।। ५९ ।।

पाशं प्रपूरितमहासुमतिप्रकाशं
यो वा तव त्रिपुरसुन्दरि सुन्दरीणम् ।
आकर्षणेऽखिलवशीकरणे प्रवीण-
श्चित्ते वसन्स भुवनत्रयवश्यकृत्स्यात् ।। ६० ।।

यः स्वान्ते कलयति कोविदस्त्रिलोकी-
स्तम्भारम्भणवेक्षणमत्युदारवीर्यम् ।
मातस्ते विजयीतराङ्कुशं स योषां
देवां स्तम्भयति च भूभुजोऽत्र सैन्यम् ।। ६१ ।।

पाशध्यानवशात्समस्तवशता मृत्योर्वशत्वं महा-
दुर्गस्तम्भमहाङ्कुशस्य मनसा मायाममेयां तरेत् ।
पाशध्यानवशाद्भवेद्भवमहामोहाम्भसो जृम्भणं
प्रख्यातप्रसवेषुचिन्तनवशात्तत्तच्छरव्यं सुधीः ।।

---

1. पुष्पेष्वास अथवा पुण्ड्रेक्षूत्थ ।
2. मोहाम्भोधेः प्रपूर्ण विधुर्भवेत् इति युज्यते !

न्यासं कृत्वा गणेशं ग्रहभगणमहायोगिनी राशीपीठैः
पञ्चाशन्मातृकार्णैः सहितबहुकलैरष्टवाग्देवताभिः ।
स स्त्री(श्री)कण्ठादियुग्मैर्निजविमलतनौ केशवाद्यैश्च तत्त्वैः
षट्त्रिंशत्क(द्भिर्धराद्यै)माद्यैर्भगवति भवतीं यःस्मरेत्सत्वमेव।।

सुरपतिपुरलक्ष्मीजृम्भणातीतलक्ष्मीः
प्रभवति निजगेहे यस्य देवत्वमार्ये ।
विधृतबहुकलानां पात्रभूतस्य तस्य
त्रिभुवनविदिता सा जृम्भिता कीर्तिरच्छा ।। ६४ ।।

मातस्त्वं भूर्भुवःस्वर्महिततमतनुं त्वन्तरिक्षेन्दुसूर्यै-
राज्ञाशुक्रेन्दुवह्नीन्दुभिरपि निगमब्रह्मभिः प्रोतशक्तिम् ।
प्राणापानादियुग्मे कलयति सकलं मानसेध्यानयोगा-
द्येषां तेषां सपर्या भवति सुरकृता ब्रह्म ते जानते च ।। ६५

क्व मे बुद्धिर्वाच(चः) परमविदुषो मन्दसरणिः
क्व ते मातर्ब्रह्मप्रमुखविबुधाः स्वान्तवचसः ।
अभूमा विष्फूर्तिः परतरमहिम्नस्तव नुतौ
प्रसीद क्षन्तव्यं बहुलतरचापल्यमपि मे ।। ६६ ।।

प्रसीद परदेवते मम हृदि प्रभूतं भयं
निवारय दरिद्रतां दलय देहि सर्वज्ञताम् ।
विधेहि करुणानिधे शिरसि पादयुग्मं स्वकं
विदारय जरामृती त्रिपुरसुन्दरि श्रीशिवे ।। ६७ ।।

इति त्रिपुरसुन्दरीस्तुतिमिमां पठेद्यः सुधीः
स सर्वदुरितटवीपटलचण्डदावानलः ।

---

1. षट्त्रिंद्भिर्धराद्यैः ।

लभेन्मनसि वाञ्छितं प्रचुरसिद्धि ऋद्धिर्भवे-
दनेकविधसम्पदां पदमनन्यतुल्यो भवेत् ।। ६८ ।।

सङ्गीतं सरसं कवित्वसरणिं चाप्राणवाचा[1] श्रुति-
व्याख्यानं हृदि तावकीन चरणद्वन्द्वं च सर्वज्ञाम्
श्रेष्ठे[2] कर्मणि कालिके तव बलं श्रीजृम्भणं मन्दिरे
सौन्दर्यं वपुषि प्रकाशमतुलं प्राप्नोति विद्वत्कवीट् ।। ६९ ।।

पृथ्वीपालप्रकटमकुटस्त्रग्रजोरञ्जिताङ्घ्रि-
र्विद्वत्पूजानतिमति समाराधितो बाधितारिः ।
विद्याः सर्वाः कलयति हृदा भासयन्ति प्रभाभिः
लोकाः सर्वे नवनवपदैरिन्दुबिम्ब प्रकाशैः ।। ७० ।।

भूष्यं वैदुष्यमुद्यद्दिनकरकिरणाकारकौमार तेजाः
सुज्ञानं भूरिमानं दिनकरललितं दुर्गमं योगमार्गम् ।
आयुष्यं चाष्टसिद्धिं हरगिरिविशदां कीर्तिमभ्येत्य भूमौ
देहान्ते ब्रह्मपारं परमशिवचिदाकारमभ्येति विद्वान् ।।

उच्चेषु नीचेष्वपि दर्शनेषु
प्रकाशते देवि तव स्वरूपम् ।
समुज्ज्वलत्येव हि यज्ञवाटे
चण्डालवेश्मन्यपि जातवेदाः ।। ७२ ।।

**स्कन्द उवाच**

दुर्वाससा महितदिव्यमुनीश्वरेण
विद्याकलायुवतिमन्मथमूर्तिनैव ।

---

1. चाम्नाय वाक्यस्मृती . . . ।  2. श्रद्धाम् ।

स्तोत्रं व्यधायि रुचिरं त्रिपुराम्बिकामाः
        वेदाङ्गमौलिपटलैर्विदितैकमूर्तेः ।। ७३ ।।

सदसदनुग्रह निग्रह-
        स्फीतनिजविग्रहो भगवान् ।
सर्वासामुपनिषदां
        दुर्वासा जयति देशिकः प्रथमः ।। ७४ ।।

छत्रं चामरयोर्युगं व्यजनमादर्शं तथा मद्दलै-
        र्भेरीशङ्खमृदङ्गकाहलकलं गीतं च नृत्यं तथा ।
साष्टाङ्गप्रणतिः स्तुतिर्बहुविधा चैतत्समस्तं मया
        सन्तुष्टेन समर्पितं तव शिवे सन्तुष्टये कल्पताम् ।।

**सूतः उवाच**

इत्युक्त्वा स मुनिर्गिरीन्द्रतनयापादाब्जयोः प्राणम-
        न्नेत्राब्जोत्थसरिज्झरीरसभरैरानन्दितस्वान्तरः ।
देवीं वीक्ष्य मुदा तदाह मुनीराड् देवि प्रसीदेति तां
        कैलासाचलमार्गपालिसरणिं शम्भोः कृपां केवलम् ।।

तत्स्तुतिं सा शिवा श्रुत्वा सन्तुष्टा मेनया सह ।
तमाह विनयानम्रं दुर्वाससमकल्मषम् ।। ७७ ।।

**देवी उवाच**

महिम्नैव तवानेन तुष्टाहं त्वत्तपस्यया ।
वृणु कामान्यथेष्टं ते यावदिच्छा मुनेऽधुना ।। ७८ ।।

इत्थं देव्या वचः श्रुत्वा स दुर्वसा महामुनिः ।
प्राञ्जलिः प्रार्थयामास प्रणम्य परमेश्वरीम् ।। ७९ ।।

दुर्वासाः

भक्तिं त्वत्पदयोः पूजां कैवल्यं शिवदर्शनम् ।
कैलासगमनं देवि ममैवेष्टं सदाम्बिके ।। ८० ।।

नान्यच्चकामयेऽहं वै कामारिपदपूजनात् ।
तेनैव सर्वकामानां प्राप्तिर्मेऽद्य महेश्वरि ।। ८१ ।।

केदारेशं महालिङ्गं त्वत्पितुर्मौलिसंस्थितम् ।
तत्संसेकाय देवेशि आनयाशु सरिद्वराम् ।। ८२ ।।

सूतः उवाच

इत्थं दुर्वाससो वाक्यं श्रुत्वा सा जगदम्बिका ।
प्राह तं मुनिमीशानी यत्त्वयोक्तं तथा भवेत् ।। ८३ ।।

तत्रैव गङ्गा देव्या च समृताऽऽगान्मौलितो नगात् ।
तस्यां सा मेनया सस्नौ दुर्वासा मुनिभिः सह ।। ८४ ।।

स्नात्वाऽभ्यर्च्य महालिङ्गं केदारेशं महेश्वरी ।
स्वपितुर्भवनं चागादनुगृह्य च तं मुनिम् ।। ८५ ।।

स्कन्दः (उवाच)

मुनिर्नत्वा देवीं पशुपतिमपीशं त्रिजगतां
ययौ कैलासस्थं चिरतरदृशोर्दर्शनफलम् ।
स सम्प्राप्येशानं समकथयदीशाय हि तदा
महादेव्या दत्तं वरमपि मुदा तत्र विनतः ।। ८६

सम्प्राप्य कैलासवरं मुनीद्रो
नत्वा महेशं विवशो ननर्त ।
महेश विश्वेश प्रसीद शम्भो
इतीरयंस्तत्र मुनीन्द्रवर्यः ।। ८७ ।।

देव्या तदा तं मुनिमीशिताऽसो-
ऽनुग्राहितं प्राह शिवः कटाक्षैः ।
धन्यस्त्वमित्याह शिवोऽपि तं मुनिं
कैलासमौलौ निवसेत्यशात्तदा ।। ८८ ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे देव्यामहिम्नःस्तवो नाम
एकोनत्रिंशोऽध्यायः ।।



## ।। त्रिंशोऽध्यायः ।।

**जैगीषव्यः (उवाच)**

दुर्वाससस्तारकारे श्रुतमाख्यान मुत्तमम् ।
देवीप्रसादसम्पत्तिमहिम्नःस्तव कीर्तनम् ।। १ ।।

कैलासदर्शनं तस्य शिवदर्शनमेव च ।
श्रुत्वा हृष्यामि मुनिभिः सहैभिर्मुनिपुङ्गवैः ।। २ ।।

किं चकार महादेवी हिमाद्रौ च पितुर्गृहे ।
कथं सा पूजिता तेन हिमशैलेन मेनया ।। ३ ।।

तदाचक्ष्व महाभाग श्रोतुं कौतूहलं हि मे ।

**सूतः (उवाचः)**

जैगीषव्येन कथितं श्रुत्वा वाक्यं हराङ्गजः ।। ४ ।।

साधु साध्विति तं चोक्त्वा कथयामास पूजनम् ।
देव्या हिमादिशैले च केदारेशार्चनं द्विजाः ।। ५ ।।

मेनया भूधरेन्द्रेण कृता चापचितिर्मुदा ।
देव्या तत्कथमामास जैगीषव्याय पृच्छते ।। ६ ।।

**स्कन्द उवाच**

सा नित्यं गिरिजा तत्र गिरिराजेन पूजिता ।
उवास भवने तत्र पितुः परमहर्षिता ।। ७ ।।

आलिङ्गनैः परिवृता दिव्यसिह्मासनस्थिता ।
मेनया पूजिता नित्यं विहारशयनासनैः ।। ८ ।।

दिव्यमञ्चे सुधासौधे [1]मणिपीठेऽधिशायिनी ।
पुष्पैर्गन्धैर्भक्ष्यभोज्यैः पेयवासोविभूषणैः ।। ९ ।।

सखिभिः सेविता देवी निनाय दिवसानृतून् ।
वसन्ते समनुप्राप्ते समरन्ती शङ्करं तदा ।। १० ।.

हिमाद्रिविपिने देवी कुसुमापचयादरा ।
नानाद्रुमलताः फुल्लाः सम्पश्यन्ती तदाद्रिजा ।। ११ ।।

स्वपितुर्मौलिकासारनलिनानि प्रपश्यती ।
पुन्नागसरलान्वृक्षान्कोविदारान्मधूककान् ।। १२ ।।

प्रफुल्लान्त्सल्लकान्देवी पश्यन्ती नगमूर्धनि ।
अशोकशाखामालम्ब्य स्वकराग्रेण सा शिवा ।। १३ ।।

एकान्ते चिन्तयन्ती सा शिवपादसरोरुहाम् ।
कैलासमौलिसौधेषु शिवेन हि समागमम् ।। १४ ।।

उत्फुल्लनलिनीं दृष्ट्वा तत्तटस्था महेश्वरी ।
हंसयुग्मं तदा देवी दृष्ट्वा निःश्वसती तदा ।। १५ ।।

---

1. मणिपीठाधिशायिनीति सुगमः पाठः ।

2. असङ्गता दुरन्वयाश्च पाठाः बहुत्र दृश्यन्ते-तत्संशोधनाय क्रियमाणः प्रयत्नश्च विफल एव भवेत् - यथा - उत्फुल्लानोकहां स्तत्रेत्यस्य अन्वयः कुत्र ? तन्मूलमणि कल्पिते - मणिकल्पित-तदनोकहमूले इत्यर्थः कल्पनीयः । ततः तन्मूले - कल्पितायां वेद्यां देवी अध्यास्ते इति च दुरधिगमः प्रयोगः । वेदीं अध्यास्ते स्म इति पाठकैः स्वयं समाहितमनस्कैः ग्रन्थेऽस्मिन्बद्धादरैः अर्थः कल्पनीयः भवति । एवं बहुत्र दृश्यते ।

खिन्नाननाम्बुजा देवी हिमापायाब्जसन्निभा ।
उत्फुल्लानोकहां स्तत्र [2]तन्मूलमणिकल्पिते ।। १६ ।।

वेद्यामध्यासते देवी सखीभिर्मेनया तदा ।
चन्द्रचन्दनलिप्तापि धारासारगृहेष्वपि ।। १७ ।।

फुल्लपुष्पाम्बुसारौघशीकरासारतर्पिता ।
वीजिता व्यजनैश्चित्रैः सा तापं न जहौ तदा ।। १८ ।।

दिव्यपुष्पफलं दृष्ट्वा शिवाय विनिवेद्य सा ।
सोपहारं प्रकुर्वन्ती मेनामालिङ्ग्य सा शिवा ।। १९ ।।

विदूनमनसा देवी विरहात्परमेश्वरी ।
चन्द्रकस्तूरिकामोदि नङ्गीचक्रेऽथ चन्दनम् ।। २० ।।

निशि चन्द्रोदये देवी हिमवन्मौलिसौधगा ।
सुधाधामकरासारैः सन्तप्तहृदयाऽभवत् ।। २१ ।।

जातीकुन्दमहामल्लीकेतकोत्पलचम्पकान् ।
स्वपितुर्मौलिसंस्था सा पश्यन्ती शङ्करं विना ।. २२ ।।

निःसारं मन्यते सर्वं पित्रा मात्रा प्रपूजिता ।
मन्दं मन्दारसुभगवायुभिः परिशीलिता ।। २३ ।।

खिन्नानना सा विरहैर्महेशस्य महेश्वरी ।
न तापमजहात्क्वापि धारासारगृहेष्वपि ।। २४ ।।

व्यजनैर्वीजिता देवी सखीभिश्चामरैरपि ।
पद्मान्यपि हिमासारं स्वपितुर्मौलिसंस्थिता ।। २५ ।।

मणिसौधेषु दुर्गेषु फलान्यप्युपजिघ्रती ।
मेनया सान्त्विता देवी हृदयेन विदूयता ।। २६ ।।

अञ्जनं रोचनागन्धं कस्तूरीकुङ्कुमं निशाम् ।
निर्बन्धेन तदामातुर्भोज्यं पेयं च सा शिवा[1] ।। २७ ।।

शय्यां सुमैस्तदा क्लृप्तां दिव्यमञ्चेषु धूपिताम् ।
मणिदीपैश्च विविधैः कुम्भादर्शगृहेऽम्बिका ।। २८ ।।

सुप्तापि(वि) निद्रा सा देवी चिन्तयित्वा महेश्वरम् ।
प्रबुध्यन्ती क्षणाद्देवी सखीभिः सेवितापि च ।। २९ ।।

ताम्बूलगन्धपुष्पाद्यैर्दिव्यभक्ष्यान्नराशिभिः ।
क्व शङ्करः इति स्वप्ने पृच्छत्यभित एव सा[2] ।। ३० ।।

कैलासमौलिसौधेषु विहर त्वं हरादरात् ।
इत्यर्धोक्तिपरा देवी पश्यन्ती सा स्वमातरम् ।। ३१ ।।

हिमाद्रौ चिन्तयन्ती सा निद्रातन्द्रितलोचना ।
दिवा हिमाद्रिविपिने केकिकोकिलकूजनैः ।। ३२ ।।

परितप्यति सा देवी महेशविरहातुरा ।
मेनया कन्दुकक्रीडां कुर्वन्ती क्षणमम्बिका ।। ३३ ।।

हिमाद्रिमौलिपालीषु फलान्यप्युपभुञ्जती ।
तदीयवनवातोत्थैः पुष्पकेसररेणुभिः ।। ३४ ।।

---

1. रोचयामासेति क्रिया अध्याहार्या ।    २. पश्यन्ती इति योजना ।

भल्लैरिव स्वाङ्गसूतैरित्यमन्यत सा शिवा ।
कदाचिन्मेनया देवी मैनाकेन सखीगणैः ।। ३५ ।।

रत्नान्दोल महाक्रीडां कुर्वन्ती वृक्षलम्बितैः ।
हिमाचलमहामौलीवरप्रासादभूमिषु ।। ३६ ।।

हल्लीसलास्यमालीभिः कुर्वती सास्मराच्छिवम् ।
आदर्शं मुखनिःश्वासैर्मलिनं साऽकरोच्छिवा ।। ३७ ।।

हिमवानपि तां दृष्ट्वा विरहक्लान्तमानसाम् ।
पुनः पूजासमारम्भैः पूजयामास पार्वतीम् ।। ३८ ।।

मेनया लालिता देवी दिव्यासनविहारकैः ।
जलक्रीडासमारम्भैर्धारासारगृहान्तरैः ।। ३९ ।।

स्वमौलिविपिनोत्फुल्लशाखिदर्शनकोतुकैः ।
मृगपक्षिगणानन्दैर्मयूरवरकेतनैः ।। ४० ।।

सारङ्गवारणहरि हरिणालोकनैः शिवाम् ।
तोषयामास शैलेन्द्रो देवीं संवत्सराष्टकम् ।। ४१ ।।

सा निनाय समा देवी स्वपितुर्मौलिसंस्थिता ।
तां द्रष्टुमागताः सर्वास्तपस्विन्यः सुराङ्गनाः ।। ४२ ।।

लक्ष्मीर्वाणी शची चैव स्वधा स्वाहा सुराङ्गनाः ।
अरुन्धत्यनसूया च गार्गी मैत्रायणी तथा ।। ४२ ।।

ताराश्च रोहिणीमुख्या रम्भाद्याश्चाप्सरोगणाः ।
देवी पादाम्बुजद्वन्द्वं वीक्षितुं ता हिमालयम् ।। ४४ ।।

समायाता विमानस्था [1]तपोतीर्थे महेश्वरीम् ।
वस्त्राभरणपुष्पाणि कुङ्कुमं चन्दनं निशाम् ।। ४५ ।।

फलमूलोपधानं[2] च ताभिर्दत्तमरोचयत् ।
तत्र तत्रोपविविशुः समन्तात्ता वराङ्गनाः ।। ४६ ।।

गायन्ति गानं गन्धर्वा नृत्यन्त्यप्सरसस्तदा ।
वीणातोद्यं वादयन्ती(न्त्यः) किन्नर्यःस्वरमूर्च्छनैः ।। ४७ ।।

फलमूलैर्निशाभिश्च कुङ्कुमैर्वरचन्दनैः ।
पुष्पैः समर्चयामासुर्धूपैर्दीपैः सुराङ्गनाः ।। ४८ ।।

मुनिपत्न्यस्तदा देव्या मेनया च समन्विताः ।
लक्ष्मीं वाणीं शचीं चैव तथान्याः सुरयोषितः ।। ४९ ।

तापसीषु तपश्चोचे कुशलं गिरिजा तदा ।
देवपत्नीषु देवानां कुशलं लोकवार्तया ।। ५० ।।

सा देवी मधुरालापैस्ताः सम्भाव्य यथाविधि ।
उवास नगहर्म्येषु तास्तदोचुः सुराङ्गनाः ।। ५१ ।।

दयारसघने शिवे विकचपङ्कजास्येऽम्बिके
सुचम्पकसरावलीमधुरगन्धजाजीसरे ।
सुगुच्छवरमल्लिकाविधृतपाटलोशीरकै-
र्विराजितकपर्दके विलसदिन्दुकोटीरके ।। ५२

नमस्सुरपदाम्बुजे[3] भवहरं[4] नमस्ते नमः ।। ५३ ।।

---

1. नद्यस्तीर्था महेश्वरीम् । 2. उपायनं च ।
3. नमत्सुरपदप्रदे अथवा नमस्सुरवरप्रदे । 4. भवहरे ।

[1]मञ्जीरशिञ्जितरणन्मणिपादकञ्जो-

पमामकरुणायितलसत्ककोद्यपादद्वयम् ।

[2]सुरगणोत्तममौलिकोटि-

घृष्टं ससंनखजिताम्बर कान्तिकान्तम् ।। ५४ ।।

त्वामम्बमं(चाम्)बुरुहगर्भरसास्यनेत्रे

लग्ना विलग्नहृदयाः सुतरां नमस्ते ।। ५५ ।।

जय देवि जगद्वन्द्ये प्रपन्नार्तिहरे शिवे ।
तव पादाम्बुजद्वन्द्वदर्शनं नः क्व वा भवेत् ।। ५६ ।।

तव पादाम्बुजार्चातो धन्या मान्याः सुरासुराः ।
शिववामाङ्कभागस्था सदा कैलासवासिनी ।। ५७ ।।

तव पादप्रभाजालैर्झता(र्घृष्टा) लोकत्रयावली ।
अद्य धन्यतरः कालो ह्यद्य धन्ये विलोचने ।। ५८ ।।

मुनिदेवाङ्गनाः सर्वा यत्ते दृष्टं पदद्वयम् ।
वेदैरपि ह्यविज्ञातं वेदान्तैरपि ते पदम् ।। ५९ ।।

तवाद्य दर्शनं जातं सफला नो मनोरथाः ।
इति लक्ष्म्यादिकानां च वचः श्रुत्वा महेश्वरी ।। ६० ।।

---

1. मञ्जीरशिञ्जितरणन्मणिपादयुग्म

[illegible]तलसत्ककोद्यम् ।

[illegible]

2 पादद्वयं सुरगणोत्तम . . . घृष्टं समं नखजिताम्बर. . . . . ।।

समीक्ष्य देवीः सर्वास्ता देवी प्राह तदा रमाम् ।

**देव्युवाच**

क्वचि(कच्चि)त्ते कुशलं पद्मे वाणीन्द्राणि स्वधे तव ।।

अरुन्धत्यनु सूयाद्या गार्गि मैत्रायणि मुद्रिके ।
गन्धर्व्यश्चाद्य किन्नर्यो युक्ता वा पतयोऽद्य किम् ।। ६२ ।।

इति देव्या वचः श्रुत्वा विस्मितास्ताः सुराङ्गनाः ।
प्रोचुरञ्जलिबन्धेन देवीं भगवतीं शिवाम् ।। ६३ ।।

**देव्युवाच (देव्य ऊचुः)**

त्वयेति भावितानां हि कुशलं सर्वदा शिवे ।
तव दृष्टं पदाम्भोजं मङ्गलानां च मङ्गलम् ।। ६४ ।।

वयं धन्यतमा जातास्त्वदालोकनमात्रतः ।
देव्या ताः पूजिता देव्यो नत्वा देवीं ययुर्गृहान् ।। ६५ ।।

देवी सा स्वपितुर्मौलौ केदारेशं समार्चयत् ।
पित्रा कल्पितसम्भारैः प्रदोषेषु महेश्वरी ।। ६६ ।।

मेनया च सखीभिश्च विगाह्य सरितां वराम् ।
गङ्गाम्बुनिर्मलघटैः पञ्चामृतघटैः शिवा ।। ६७ ।।

घृतत्रिपुण्ड्ररुद्राक्षा बिल्वपुष्पैश्च पङ्कजैः ।
चन्दनालेपनैर्वस्त्रैः फणीन्द्रवरकोद्भवैः ।। ६८ ।।

[illegible]
शङ्करं पूजयामास केदारेशं महेश्वरम् ।। ६९ ।।

दिव्यान्नराशिभिर्देवी भक्ष्यभोज्यफलैरपि ।
छत्रचामरपङ्क्तिभिर्मृदङ्गवरकाहलैः ।। ७० ।।

शङ्खदुन्दुभिनिर्घोषैर्वेणुवीणारसैः शिवा ।
सखीभिः कल्पितापारवरिवस्यादरा शिवा ।। ७१ ।।

प्रदोषेषु विशेषेण प्रणामप्रक्रमैस्तथा ।
पूजान्ते गिरिशं स्तोत्रैस्तुष्टावाष्टाकृतिं शिवम् ।। ७२ ।।

केदारेशं महादेवी समाकर्णय तत्स्तुतिम् ।। ७३ ।।

इत्थं सा परमेश्वरी त्रिजगतामाधारभूतं हरं
केदारेशमुमा समार्चयदहो पुष्पेषुकालेऽद्रिजा[1] ।
मोदापारमहोदधिप्रविलसन्मग्नाऽन्तरायैर्विना
प्रालेयाचलमौलिशेखरमहालिङ्गं च केदारकम् ।। ७४ ।।

ब्रह्माद्यैर्हरिरुद्रशक्रविनुतं यक्षैर्मुनीन्द्रैरपि
वेदान्तैरपि सङ्घशः श्रुतिगणैः संसेवितं संस्तुतम् ।
एवं सा प्रणिनाय कालकलनाच्छ्रीकालकालार्चना-
द्देवी सा गिरिराजलोचनमहानन्दैकपारारसा ।। ७५ ।।

मेनाया हृदयाब्जमध्यविलसत्पादाम्बुजा सा शिवा ।। ७६ ।।

**देव्युवाच**

सद्योजात महेश शङ्कर विभो खद्योतवत् त्वत्पुरः
स्थातुं न प्रभवो भवन्ति विबुधास्ते सोमसूर्यानलाः ।
विद्योतन्ति कथं सविद्युत इमाः स्याद्दन्तिनद्योऽपि ते
भीताः सागरगा यमानिलमरुन्नाथानिलाः पाहि माम् ।। ७७

1. काले प्रदोषेऽद्रिजा

वामदेवमुनिदेवगणेन्द्रै-
वासुदेव नयनार्चितपाद ।
भूमिदेवनिकरैरभिपूज्य
देव देव दयया परिपाहि ।। ७८ ।।

अघोर[1] घोरभवसागरकर्णिधार[2]
लीलाकृताङ्ग सुरहीर महेशधीर ।
हे मार मार करवीरसुमध्य[3]
स्रग्धरामरवराधिप धीर[4] ।। ७९ ।।

ईशान संहनन भोगितकामिनीन
प्रोद्यद्दिवाकरहुताशनशशीनयनाङ्गहीन ।
नानाविधान जगदेकनिधान शम्भो
मेनात्मजाविनुत वेदतति प्रधान ।। ८० ।।

तत्पूरुषीपूर्णजगतामुदितीति शम्भो
पारुष्य...वचसाप्य(म)धिवक्तृता ते ।
देवैश्च वेदविधिना पुरुषोत्तमेन
स्कन्देन गौरिगणपेन च पूज्यपाद ।। ८१ ।।

**स्कन्द उवाच**

एतत्तेऽभिहितो मया द्विजवर श्रोत्रे कृतार्थे तव
अंशोऽयं हि भवः सुधारससमः किं वच्मि तत्ते मधु ।
श्रुत्वांप्येतदसारसंसृतिभरं त्यक्त्वा विमुक्तो भवे-
त्तस्मिञ्छम्भुकृपा भवत्यनुदिनं प्रान्ते गणेन्द्रो भवेत् ।। ८२

---

1. हेऽघोर । 2. कर्णधार । 3. सुमाद्येति प्राचीनमुद्रितपुस्तके ।
4. स्रग्धारामरेश्वराधिप धीर धीर

कैलासाचलमौलिपालिषु चिरं रुद्रो भवेत्सत्तम
विष्णुब्रह्ममरुद्‌गणेन्द्रविदिशां नाथेषु गान्धर्वके ।
भूलोकेऽखिल भोगिनाथनिलये कोटित्रयं सङ्ख्यया
देव्यै विस्तरतः शिवोऽवददिदं तल्लक्षमानं द्विजाः ।। ८३

मार्कण्डेयदधीचिगौतममुखाच्छृण्वन्ति देवाः सदा ।। ८४

अनन्तमहिमास्पदं शिवरहस्यरत्नाकरं
विहाय युवतीजनोन्मथितचित्तवित्तार्थिनः ।
भ्रमन्ति धनिनां गृहे विकृतदन्तकीशानना
विनाशसमयेऽप्यहो परिलुठन्ति कीनाशगाः ।। ८५ ।.

निद्रातन्द्राहताङ्गा निशि कुणपसमाः प्रातरारभ्यकाला-
न्नानोपायैश्च पिण्डैर्निजजठरदरीपूर्तिये यान्ति मूढाः ।
नो कोऽपि क्षणमात्रचिन्तितशिवो न श्रूयते शाम्भवात्
संसारार्णवतारिणी शिवकथा तेषां गतिः का भवेत् ।। ८६

प्रमथपतिपदाब्जध्यानहीना न मान्या
सामान्याः शिवमन्युदग्धवपुषस्त्याज्यान्त्यजास्ते इति ।
यज्वापि क्षितिपालसूनुरपि वा आशाधिपोवा शुनः
पुच्छोषल्लघुमानसो लघुतरं तुच्छः कथं गण्यते ।।

।। इति श्रीशिवरहस्ये द्वितीयांशे जैगीषव्य स्कन्दसंवादे शतसाहस्रिकायां संहितायां त्रिंशोऽध्यायः ।।

।। परमशिवार्पणमस्तु ।।

**।। सम्पूर्णश्चायं भवांशः ।।**

# AN APPEAL

Manuscripts on Palmleaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The Manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar King of Tanjore, Rajah Serfoji, has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world famous "Sarasvati Mahal Library". It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

**DISTRICT COLLECTOR AND DIRECTOR**
Sarasvati Mahal Library,
Thanjavur.

# OUR OTHER PUBLICATIONS

| | | |
|---|---|---|
| Nauka Charitram | Sanskrit & Tamil | 30-00 |
| Sita Kalyanam | Sanskrit & Tamil | 35-00 |
| Ragaratnakaram | Sanskrit & Tamil | 15-00 |
| Dhanyakumaracharitram (Dharmaneri Kathai) | Sanskrit & Tamil | 44-00 |
| Kandukapura Mahatmyam | Sanskrit & Tamil | 25-00 |
| Ramachinthamani Aaruudam (Nandinagari Catalogue) | Sanskrit & Tamil | 25-00 |
| Vruttaratnavali (Chandas Sastram) | Sanskrit & Tamil | 30-00 |
| Kalanandakam | Sanskrit & Tamil | 55-00 |
| Prabodha Chandrika (Grammer) | Sanskrit & Tamil | 70-00 |
| Sirungarakosam | Sanskrit | 12-00 |
| Vedasara Siva Sahasram | Sanskrit | 80-00 |
| Stotra Ramayanam | Sanskrit | 25-00 |
| Mukunda Vilasam | Sanskrit | 35-00 |
| Vinatananda Vyayoga | Sanskrit | 40-00 |
| Kumaresa Satakam | Tamil | 65-00 |
| Lokaswarupam | Tamil | 75-00 |
| Kanakkathikaram | Tamil | 150-00 |
| ThiruvappanurPuranam | Tamil | 50-00 |
| Jatakachandrika | Tamil | 40-00 |
| Marathi Lavani Songs | Marathi | 35-00 |
| [illegible] | [illegible] | [illegible] |
| Nakshatra Chinthamani (Part - .II) | Tamil | 200-00 |
| Kalavidhanam | Sanskrit - Tamil | 100-00 |

